॥ श्री ॥

# रसमञ्जरी ।



मुम्बय्याम्

गोपाळ नारायण कंपनी, बुकसेलर्स.

१९२६.

किंमत १-४ आणे.

कविरत्नभानुदत्तविरचिता

# रसमञ्जरी.




गोपाळ नारायण आणि कंपनी.

बुकसेलर्स, काळबादेवी, मुंबई.

---

१९२६.

# रसमञ्जरी.

## व्यङ्ग्यार्थकौमुदीसमेता।




श्रीगणेशाय नमः ॥

सर्वे साधुजनाः सदायतहृदा सत्संप्रदायादलं
यज्ज्ञानाय कणादगौतममतान्यालोच्य तत्त्वार्थदान् ॥
वेदार्थान् ( १ ) परिशीलयन्ति रहसि स्वानन्दकन्दाकरं ( २ )
वन्दे तं जगदीश्वरं दयितया सानन्दमालिङ्गितम् ॥ १ ॥

कलितललितवंशीरन्ध्रसंधारणैकप्रवणचपलचञ्चत्पल्लवाभाङ्गुलीकम् ॥
अभिनवजलजाक्षीवृन्दचन्द्राननश्रीनियमितनयनान्तं गोपिकाकान्तमीडे ॥ २ ॥

मूले कल्पतरोरमन्दवलितग्रीवं गवालोकने
ब्रह्मेन्द्रादिलुठन्महार्घमुकुटस्पष्टांघ्रिपीठं वपुः ॥
लीलालम्पटगोपबाल[illegible] गोपिका
संकेतस्वनसावधानहृदयं सन्निदधे श्रीपतिम् ॥ ३ ॥

सकलसुरमहेशं तत्त्वविद्योपदेशं करवलयितशेषं मोक्षलक्ष्मीनिवेशम् ॥
धृतललितनिशेशं ( ३ ) कर्णभूषादिशेषं श्रितजटिलसुवेषं चिन्तये चिद्विशेषम् ॥ ४ ॥

पञ्चाशद्वर्णभेदैरपरिमिततरैरर्थजातैश्च युक्ता
नानालङ्काररम्या गणितगुणगणा साधुवृत्तैरुपेता ।
वाक्सृष्टिर्यत्प्रसादात्प्रसरति रसनोपान्तदेशे निमेषा-
न्नित्यं चित्तेनुरक्ते वसतु मम सुखं भारती सा रसाढ्या ( ४ ) ॥ ५ ॥

आसीदासीमभूमीपतिपरिवृढोदण्डचण्डप्रताप-
ज्वालामालाकरालानलशमनमहावारिवाहप्रभावः ( ५ ) ॥

---

१ वेदान्तानिति वा पाठः । २ कन्दादरमित्यन्यत्र पुस्तके । ३ विशेष्यमिति वा पाठः । ४ अयं श्लोकस्तु काशीमुद्रितपुस्तक एव । ५ प्रवाह इत्यपि पाठः ।

विद्वद्दानाम्बुधाराुरुचिरपरिचयोत्पादितानल्पधर्मैः
स्वः शाखीख्यातकीर्तिः प्रमुदितहृदयः काशिराजाभिधानः ॥ ६ ॥
यदीयनगरे परे वसति स स्वयं शंकरः समस्तजनघातजप्रबलपापसंत्रासनः ॥
तिरस्कृतभवोद्भवप्रचुरमुक्तमुक्ताफलप्रकृष्टविबुधालये सुरसरिद्रसालंकृते ॥ ७ ॥
तद्वंशजो धनुरिवाभवदेकवीरः सत्पार्थिवप्रकरकेलिविलासशाली।
यो लक्ष्यदः क्षितितले किल मार्गणानां
राजा प्रतापयुत (१) रुद्र इति प्रसिद्धः (२) ॥ ८ ॥
येन श्रीवैरिवीरोद्भवरुधिरनदी निर्मिता शक्तिघातै-
स्तत्पर्यस्तः समस्तव्रजचिकुरलसद्दीर्घशैवालजाला ॥
त्रुट्यन्मातङ्गकुम्भस्थलवहलगलच्चारुमुक्ताकलाप-
प्रोद्यत्सत्सैकतां नः पतित (३) गजघटाकोटिशुण्डादिनक्रा ॥ ९ ॥
अजनि ततो जनगीयमानकीर्तिर्मधुकरशाह इति प्रसिद्धनाम ॥
जगति जनार्दनचिन्तनैकचित्तः स्फुरदुरुसूर्यसहस्रकोटिधामा ॥ १० ॥
यत्कीर्त्या धवलीकृते त्रिभुवने जैवातृकं रोहिणी
शम्भुं पर्वतकन्यका स च निजं कैलासमुर्वीधरम् ॥
विष्णुः क्षीरनिधिं स चापि च सुधां स्वीयं गजं सिन्धुजं
नाविन्दद्विबुधः (४) सहस्रनयनो मुक्तां च विद्वद्वधूः ॥ ११ ॥
यस्योद्यत्करवालकालपुरुषः प्रत्यर्थिसीमंतिनी
चक्षुःकज्जलतस्करोपि सुचिरं हस्तावलम्बादभूत् ॥
तत्तद्वीरसमस्तपार्थिवपृथुप्रख्यातकीर्तेस्तथा
कोशस्यापि च भाजनं कलिमलप्रध्वंसिधाराम्भसः ॥ १२ ॥
तस्मादभूच्छ्रीव'वीरसिंहदेवाभिधानः प्रभुतानिधानम् ॥
कलासु सर्वास्वपि पुण्यदासु विशारदः शारदचन्द्रकान्तः ॥ १३ ॥
यस्य स्फारविपक्षपक्षसुवधूवैधव्यदीक्षागुरुः
संग्रामाध्वरकर्ममर्मकुशलः प्रत्यर्थिपृथ्वीभुजाम् ॥

---

१ प्रतापवर इत्यन्यत्र। २ मनोजकान्तिरित्यप्यन्यस्मिन्पुस्तके। ३ पततीत्यन्यस्मिन्पुस्तके पाठः। ४ विविधैरिति पुस्तकान्तरे।

प्राणानर्घ्यमणेर्भयापहरणं नाकारि किंतु प्रभो-
र्भ्रूभङ्गेण तवेति दिव्यमभजत्कोशं स खङ्गः ( १ ) परः ॥ १४ ॥
प्रत्यर्थिक्षितिपालतिन्दुकवनं यस्य प्रतापानले
सर्वे संदहति स्फुलिङ्गनिवहे दग्धो विपन्मण्डलः ( २ ) ॥
पश्चात्प्रोद्धमिषाद्विधाय विधिना नीरन्ध्रतांभाक्शनै-
स्तत्तत्कीर्तिपटाल्पखण्डनिचयैः स्वच्छोल्लसत्कांतिभिः ( ३ ) ॥ १५ ॥
ये कीर्तिं तुलयन्ति चन्द्रमहसा पीयूषसारेण वा
किंचैरावतदन्तिना सममहो यद्वीरसिंहप्रभोः ॥
मूढास्ते नियतं यया जनयिता तेषां यतः सागरः
सौधोप्याशु विलंघितत्रिभुवनस्वच्छोल्लसद्रूपया ( ४ ) ॥ १६ ॥
सद्वृन्दावनकेलिकौतुकमनाः सद्वंशमेकं करे
कुर्वाणः कमलेक्षणः कुवलयापीडैकपीडाकरः ॥
चञ्चत्साधुगतिप्रकर्षविलसत्पक्षाद्विजेन्द्राश्रयो
योभूत्केवलमंक एव कमलाकान्तः कलौ भूतले ॥ १७ ॥
अनेकसौवर्णतुलादिदात्रा बुधव्रजप्रीतिविशेषभाजा ॥
भास्वानिवास्वानपि ( ५ ) येन राज्ञा तुलां ययौ नैव तुलांशभोक्ता ॥ १८ ॥
ये ये संग्रामभूमौ निशितशरखराघ्रात ( ६ ) संत्यक्तजीवा-
स्ते सर्वे वैरिभूपाः सुरवरयुवतीकेलिमग्नाः सुखेन ॥
स्वर्लोके संवसन्तीत्यनभिमतवचो जातकोपप्रकर्षो-
यो वीरस्तत्र हन्तुं कृतसुकृतबलादभ्यगात्तान्समस्तान् । १९ ॥
तदात्मजः साधुगुणैरुपेतः श्रीचन्द्रभानुः प्रथितः पृथिव्याम् ॥
वर्वर्ति सर्वोपरिगीतकीर्तिः सदा मुदाध्यानपरः परेशे ॥ २० ॥
यस्य श्रीक्षितिपालमौलिनृपतेर्दानाम्बुनोत्पादितः
स्वः शाखीति विभाव्यते बुधगणैस्तत्त्वार्थसंदर्शिभिः ॥

---

१ सुखड्ग इत्यन्यत्र काशीपुस्तके। २ निवहेदग्धानियन्मण्डपः। ३ स्वस्थोल्लसत्कान्तिभिः। ४ जनितयातेषान्तपः सागरः सोधोथाम्बुविलङ्घितत्रिभुवनस्वस्थोल्लसद्रूपया इ० का०। ५ भास्वद्विवस्वानपि। ६ शरवराघान० इ०।

या केनापि कदापि किंचिदपि वा नालम्भि सा बाल्यतो
नो चेदुत्कटदानरीतिरवसत् ( १ ) कस्मादमुष्मिंस्तरौ ॥ २१ ॥
तत्तद्याचकविन्दुवृन्दमधुरोदञ्चम्भिलिन्दोल्लस-
यद्दानाम्बुनिषेकभासुरकरे दृष्टे दिगन्तान्तरे ॥
दिङ्नागप्रकरस्त्रयीतनुरयं मध्येम्बरं स्वान् करान्
कृत्वा यत्र यया स्थिरत्वमगमन्मित्रस्य भावं ययौ ॥ २२ ॥
यस्य श्रीक्षितिनायकस्य ललितं दानोद्यमे यद्वचः
कास्ते सर्वहिरण्यमित्युदभवत्तत्कालमेवालघु ॥
तापः प्राय हिरण्यरेतसि जनिं जाड्यं हिरण्याचले
स्वेदाम्भोपि हिरण्यगर्भवपुषि स्वापाय संत्रासतः ॥ २३ ॥
गाङ्गेयस्य शतानि यः प्रतिदिनं लीलावशाद्भूपति-
र्भिक्षुभ्यः प्रददाति वैरिशिरसं संग्रामभूमौ वलीन् ॥
भूतेभ्यः किल यः प्रयच्छति कुतस्तस्यात्र साम्यं भवे-
द्गाङ्गेयस्य वलेश्च दानमहिमा विख्यातकीर्तेरपि ॥ २४ ॥
यल्लोकाः कामसाम्यं नृपकुलतिलके चन्द्रभानौ वदन्ति
तद्रूपज्ञानमन्यद्धनुषि न तु यतो यच्छरेणाशु विद्धः ॥
यस्तं स्रस्तालकान्ताः प्रगलितवसनास्त्यक्तभूषा विशेषा
धावन्ति प्रेमवद्धाः सपदि सुरवराः स्त्रैणसंघाः समग्राः ( २ ) ॥ २५ ॥
यस्योद्यत्करवालकालभुजगे संग्रामदेशे मतिं
गन्तुं कुर्वति वीरवैरिवनितावेणी भुजंगीगणः ॥
दुःखोद्रेकवशादशेषवनितामूर्धैकभूषाः समं
सस्नेहाः खलु मूर्छिता इव परं भूमौ पतन्ति द्रुतम् ॥ २६ ॥
श्रमेण रहितः सदा न च कदापि मन्दादरः
समस्तविषयेपि यः क्रिमपि नोपरक्तः कलौ ॥
अनेकतुरगाधिपः सकललोकतापापहः
कथं न खलु भानुतो भवति चन्द्रभानुः परः ॥ २७ ॥

---

१ रभवदिनि पुस्तकान्तरे । २ सरागा इति पु० ।

## श्रीगणेशाय नमः ॥

आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि
स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाशङ्कया ॥

---

यत्कीर्तिर्विमला समस्तजगति ख्याता जगन्निर्मलं
कर्तुं सन्नियमं चकार च तथा चन्द्रादिकं तत्क्षणात् ॥
प्रोद्यच्छ्यामकलाकलापमलिनं यद्वैरिवक्त्रं तथा
शक्तानेत्यति लज्जयैव तु गता पारं पर वारिधेः ॥ २८ ॥

यदङ्गजन्मामरगीयमानप्रतापकीर्तिः परपक्षहन्ता ॥
श्रीपूर्णमल्लः प्रतिमल्लरूपी भीमेन वर्वर्ति धरातलेऽस्मिन् ॥ २९ ॥ (१)

यः पावकादपि लसद्वडवानलाच्च चञ्चत्प्रचण्डकिरणादपि रुद्रनेत्रात् ॥
जाज्वल्यमानकरवालकरालतेजाः प्रत्यर्थिपार्थिवकुलोत्तमसेव्यमानः ॥ ३० ॥

यस्यानुजाः संयति वज्रसाराः श्रीमित्रसेनप्रमुखाः सुखेन ॥
धर्मार्थकामाभिनवस्वरूपाः संपत्सुखं यांति महेन्द्रमृग्यम् ॥ ३१ ॥

विद्वद्भिः समुपाश्रिता मुनिगणव्रातैः पुराणैः पुरा
शाखाभिर्निगमद्रुमस्य रचिता विद्यातरिः सादरम् ॥
मग्नाप्यत्र दरिद्रभावजलधौ सत्कर्णधाराधिक-
श्रीवीरोद्भटचन्द्रभानुविभुना येनाधुना तार्यते ॥ ३२ ॥

व्यञ्जनामग्नचित्तेन गौतमीतीरवासिना ॥
श्रीत्र्यम्बकतनूजेन पण्डितानन्तशर्मणा ॥ ३३ ॥

रसिकश्रुतिभूषास्ति भुवि या रसमञ्जरी ॥
व्यङ्ग्यार्थकौमुदीव्याख्या तन्यते तत्कुतूहलात् ॥ ३४ ॥

आदरादपि कुर्वन्तु दुर्जना न कथं च न ॥
हेलयापि च सन्तोऽत्र दृष्टिं कुर्वन्तु मत्कृतौ ॥ ३५ ॥

---

१ द्वौ श्लोकौ पुस्तकान्तरे न विद्येते ।

तल्पे किंच मृगत्वचाविरचिते निद्राति भागैर्निजै—

रन्तः प्रेमभरालसां प्रियतमामङ्के दधानो हरः ॥ १ ॥

---

किं मे प्रार्थनयाऽनया (१) यदि गुणः कश्चित्स्वसूक्तौ भवे-
द्विद्वद्वृन्दमिदं तदा द्रुततरं तेनैव बद्धादरम् ॥
नोचेद्दीनदयालुदैन्यवचनैस्तच्छ्रोष्यते केवलं
चित्तं संमदमातनोति कृतिनः किं तावता स्वान्तरे ॥ ३६ ॥

सगुणापि हन्त विगुणा भवति खला स्याद्विचित्रवर्णापि ॥
आखुमुखादिव शाटी पदपरिपाटी कवेः कापि ॥ ३७ ॥

सदोषमपि निर्दोषं भवत्यग्रे विपाश्चितः ॥
रामस्येवार्जुनवपुः कवेश्च सरसं वचः ॥ ३८ ॥

विशिष्टशिष्टेष्टकर्तव्यतापरिप्राप्तमंगलमनुषङ्गतो व्याख्यातृश्रोतृमङ्गलाय निबध्नाति। आत्मीयमिति। यः निम्नोन्नतायां (२) भुव्युच्चावचप्रदेशेषु पुरतोग्रतः। स्यात्पुरः पुरतोग्रत इत्यमरः। पुरसित्यव्ययस्य पुरस्त इति रूपं न तु पुरत इति यच्च पिपर्तेै 'घंनर्थे कविधान'मिति कप्रत्यये तदन्तात्तसिलिति दुर्घटवृत्तिकृत्समाधानं तदपि प्रकृतार्थासिद्धिकृदिति 'इयं च तेन्यापुरतोविडंबने'त्यादि महाकविप्रयोगाद्यथा तथा गतिश्चिन्तनीया। आत्मीयमेव आत्मनोयमात्मीयः 'वृद्धाच्छ' इति छः। स्वीयमेव दक्षिणमेवेत्यर्थः न तु वामं। आत्मीयपदेन वल्लभत्वं द्योत्यते चरणं पादं एकवचनेनातिवल्लभत्वेप्युच्चावचप्रदेशेषु दानाधिकं प्रेम प्रियविषयकमिति व्यज्यते। श्रमाशङ्कया श्रमस्य खेदस्य आ ईषत् शङ्का वितर्कः तया। एवं च प्रियाश्रमे यत्संशयवशादेवमकरोत् किं पुनस्तच्छ्रमानिर्णय इति भावः। प्राणप्रियाया इति शेषः। प्राणप्रियायाः श्रमाशङ्कयेति चाग्रेप्यन्वेति। दधाति निक्षिपति प्राणप्रियायाश्चातिमृदुलचरणसरोजस्य तथाविधप्रदेशेषु प्रथमः विन्यासेन श्रमो मा भवत्विति धियेति भावः। किं च यः स्वीयेनैव करेण दक्षिणकरेण तरोर्न तु तरूणां पुष्पं न तु फलानि तदप्येकं न तु बहूनि कर्षति

---

१ अथवेति का० पु०। २ मध्यमपदलोपीसमास इत्येकस्मिन्पुस्तके।

गृह्णाति एवं चैकपुष्पस्यावचयेपि एतस्याः श्रमो मा भवतु इति धिया तत्तथाकरोदिति प्रियाप्रेमातिशयो द्योत्यते। किंचान्यदपि मृगत्वचा एणाजिनेन विरचिते विशेषेण उच्चावचशून्यतया रचिते सज्जित तल्पे शयनीये। तल्पं च शयनीयं स्यादिति विश्वः। निजैरेव स्वीयैरेव दक्षिणैरित्यर्थः भागैरेकदेशैः। एवं च सर्वशयनीयमभिव्याप्य कोमलाङ्ग्याः कामिन्यास्तदेकदेशेपि यथा नाङ्गसंबन्धः किंतु स्वशरीरोपर्येव यथाङ्गसंबन्धस्तथाकरोदिति भावः। व्यङ्ग्यः पूर्ववदेव। निद्राति स्वपिति एव च स्वापे परिवर्तनाभावात्प्रेम्णि स्थिरत्वमावेद्यते नन्वेतावता हरस्यैव प्रियाविषयं प्रेम न तद्विषयकं तत्तस्या इत्यत आह। अन्तःप्रेमभरालसामिति। अन्तः अभ्यन्तरे प्रेम यद्धरविषयकं तस्य यो भरः वाहुल्यं तेनालसां तत्तद्व्यापारायोग्यां अन्तःपदेन पुष्पावचयादिकर्तव्यतारूपवाह्यप्रेमकार्याभावो द्योत्यते। एवं च प्रेम्णि परस्परनिरूपितत्वं ध्वन्यते प्रियतमां अतिशयेन प्रियेति प्रियतमा ताम्। अतिशयश्च प्रागुक्तरीत्यानुसंधेयः। यद्यपि हरस्य प्रियान्तराभावेनावधारणफलकतमव्वैयर्थ्यं तथापि प्रियाशव्दस्य संवन्धिशव्दत्वेन येषां याः प्रियाः तासां मध्ये इयं प्रियतमेत्युक्ते तादितरदम्पत्यनुगतप्रियत्वापेक्षयैतस्याः असाधारणं प्रियत्वमिति न तद्वैयर्थ्यं। अङ्के शरीरार्धभागे नपुंसकालिङ्गेन कठिनत्वाभावो व्यज्यते एकवचनेन च वहुकालमेकाङ्क एवावधारणेपि श्रमाज्ञानात् प्रियाविषयक प्रेमनिमग्नमानसत्वं हरस्य व्यज्यते दधानः सन् वहन् हेतुगर्भमिदं विशेषणं। स हरः जयतीत्यध्याहारः एवं च सर्वोत्कृष्टताशालित्वप्रतिपादनेन स्वस्य सर्वान्तर्गतत्वेन तन्निरूपितापकृष्टत्वप्रतीत्या मानसप्रणतिरूपं मङ्गलमावेदितं भवति अत्र प्रियतमाधारणस्य हेतोश्चरणत्रयत्रपदार्थत्वेन काव्यलिङ्गमलंकारः। तदुक्तं हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतमिति। नायकश्चायमनुकूलः। तल्लक्षणं तु सार्वकालिकपराङ्गनापराङ्मुखत्वे सति सार्वकालनिजाङ्गनानुरक्तत्वम् अत्र प्रथमवर्णदानात्सफलत्वं। तदुक्तं भामहेन। अवर्णात्संपत्तिर्भवतीति मगणपददानादपि तदेव फलं भवति मोभूमिस्त्रिगुरुश्रियं दिशतीति वृद्धवचनात्। इदं च फलं काव्यनायकस्य तत्कर्तुस्तत्पठितुर्वा यथासंभवं व्यस्तं समुचितं वा ज्ञेयं। यत्र तु नायकः। प्राचीनो देवतादिर्वा स्वकल्पितो वा तत्र तत्कर्तुस्तत्पठितुर्वेति विवेकः। शार्दूलविक्रीडितं वृत्तं। • कर्णः कुण्डलसंगतः करतलं चामीकरेणान्वितं पादान्तो नवनूपुरेण कलितो हारौ प्रसूनोज्ज्वलौ। 'गुर्वानन्दयुतो गुरुर्यदि भवेत्तं न्यूनविंशाक्षरं। नागाधीश्वरपिङ्गलेन भणितं शार्दूलविक्रीडित'मिति तल्लक्षणात्॥ १॥

विद्वत्कुलमनोभृङ्गरसव्यासङ्गहेतवे ॥
एषा प्रकाश्यते श्रीमद्भानुना रसमञ्जरी ॥ २ ॥

तत्र रसेषु शृङ्गारस्याभ्यर्हितत्वेन तदालम्बनविभावत्वेन नायिका तावन्निरूप्यते । सा च त्रिविधा स्वीया परकीया सामान्या चेति । तत्र

---

श्रोतृप्रवृत्तये प्रयोजनं दर्शयन् स्वकीर्त्यनुवृत्तये स्वग्रन्थनामनी प्रतिजानीते। विद्वदिति। विदुषां विपश्चितां न तु मूर्खाणां तथा च तैरेतद्ग्रन्थानादरणेपि न क्षतिरिति भावः। कुलं गणः। सजातीये गणे गोत्रे देहेपि कलितं कुलमिति विश्वः। तस्य यन्मनः मन इत्येकवचनेन सर्वविद्वन्मनसामेकजातीयव्यसनशालित्वं द्योत्यते। तदेव भृङ्गः मधुलिट् भृङ्गपदेन रसलम्पटत्वं व्यज्यते। तस्य यो रसस्तस्य शृङ्गारादेः पुष्परसस्य च व्यासङ्गः प्राप्तिः स एव हेतुः तस्मै निमित्तकारणहेतुषु 'सर्वासां प्रायदर्शन'मिति वाचनिकी चतुर्थी। श्रीमद्भानुना श्रीः प्रतिभा कवित्वबीजभूतप्राग्भावीयसंस्कार इति यावत् तद्वता भानुनाम्ना कविना एषा बुद्धिस्था एवं च समूलत्वं द्योत्यते रसमञ्जरी रसः शृङ्गारादिः तद्वती मञ्जरीव मञ्जरी। यद्यपि रसत्वं सभ्यानामेव तथापि आयुर्घृतमिति वदुपचारः। प्रतिपाद्यप्रतिपादकभावं संबन्धेन तद्वत्त्वमिति केचित्। प्रकाश्यते स्फुटीक्रियते। अन्यापि शोभाशालिरविणा विकाशिता रसवती मंजरी भृङ्गरसव्यासङ्गहेतुर्भवति एवं च रसावाप्तिः प्रयोजनमभिहितम्। अत्र रसव्यासङ्गहेतोरुत्तरार्धपदार्थत्वे काव्यलिङ्गमलंकारः। स च श्लेषच्छेकानुप्राणितः। वक्रं वृत्तं। पंचमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः। गुरुषष्ठं तु पादानां शेषेष्वनियमो मतः। प्रयोगे प्रायिकं प्राहुः केप्येतद्वक्रलक्षणमिति तल्लक्षणात् ॥ २ ॥

प्रकृतमाह तत्रेत्यादिना। तत्र रसमञ्जर्यां रसेषु शृङ्गारादिषु। शृङ्गारस्य शृङ्गं प्राधान्यं इयर्तीति शृङ्गारस्तस्य ऋगतावित्यस्मात् कर्मण्यण् अचोञ्णितीति वृद्धिः। शृङ्गं प्राधान्यसान्वोश्चेत्यमरः। अभ्यर्हितत्वेन प्रधानत्वेन। अभ्यर्हितेनेत्यत्र 'शाब्दी ह्याकाङ्क्षा शब्देनैव शाम्यति' इति न्यायात्। पुरुषोत्तमाश्रयत्वादिति हेतुपूरणा। एवं च तच्छब्देन विशिष्टपरामर्शात्पुरुषोत्तमाश्रयशृङ्गारालम्बनविभावत्वेन। नायिकाया इति शेषः। तावन्नायकनिरूपणात्प्राक् नायिका नयति वशीकरोति सा नायिका निरूप्यते निरूपणविषयीक्रियते तद्विषयं निरूपणं क्रियत इत्यर्थः। एवं च शृङ्गारालम्बन विभावत्वस्य नायिकानायकयोस्तुल्यत्वे किमिति

स्वामिन्येवानुरक्ता स्वीया । न च परिणीतायां परगामिन्यामतिव्याप्तिः अत्र पतिव्रताया एव लक्ष्यत्वात् तस्याश्च परगामितया परकीयात्वमपि समायाति । अस्याश्चेष्टा शीलसंरक्षणमार्जवं क्षमा च । यथा

प्रथमतो न नायकनिरूपणमितिदूषणमलग्नकं वेदितव्यम् । ननु निरूपणीयनायिकानामनेकत्वात्कथमेकवचनमिति चेन्न नायिकात्वस्य रागवत्त्वे सति शृङ्गारालम्बनस्त्रीत्वरूपोपाधेः सर्वानुगतत्वेन तद्वती निरूप्यते इत्यर्थान्न काचिदक्षतिः ऋजवस्तु आलम्बनविभावपदे नात्राश्रयमात्रमुच्यते । तथा च नायकरत्याश्रयत्वं नायिकायां यथा तथा नायिकाविषयकरत्याश्रयत्वं नायकेपीति तुल्यत्वेपि यथा पूर्वं रक्ता भवेन्नारी पुमान्पश्चात्तदिङ्गितैरित्युक्त्या पूर्वं नायिकानुरागो निरूप्यते तथा नायिका प्रथमतो निरूप्यत इति सकलकविसंप्रदायानुरोधादेवमभिहितमित्याहुः । सा चेति । चस्त्वर्थः । त्रिविधा त्रिविधोपाधिमती । एतदेव विवृणोति । स्वीयेत्यादिना । तत्र प्रथमोद्दिष्टत्वात्स्वीयां लक्षयति तत्रेति । तत्र तास्वित्यर्थः । पत्यतिरिक्तानुरक्तत्वे सति पत्यनुरक्तत्वं स्वीयात्वं तद्वती स्वीयेत्यर्थः । मुग्धायां पत्यनुरागयोग्यत्वादज्ञानादिप्रतिबन्धकत्वाद्वा नाव्याप्तिः । ननु तथापि मात्राद्यनुरागवत्यां मुग्धायामत्यन्ताभावादव्याप्तिरिति चेन्न अनुरागपदेन रतेरत्र विवक्षितत्वात् । सत्यन्तव्यावृत्यमाह । नचेत्यादि । परिणीतायां पत्यनुरागवत्यां परगामिन्यां परानुरागवत्यामित्यर्थः अव्याप्तिः व्यापनं व्याप्तिः लक्षणस्य लक्ष्यमात्रसत्त्वं तदभावः अव्याप्तिः लक्ष्यातिरिक्तसत्त्वं । नचेति । स्वरविशेषसूचिताया काक्वालक्षणसत्वमस्तीत्यर्थः नन्वेतस्या लक्ष्यत्वं न लक्षणसत्त्वं विरोधीत्यत आह । अत्रेत्यादिना । अत्रास्मिन् रासिकशास्त्रे पतिव्रताया एव पतिमात्रानुरागवत्या कुत्रान्तर्भाव इत्यत आह । अस्याश्चेति । चस्त्वर्थः । उभयानुरागवत्यामित्यर्थः परगामितया परानुरागवत्वेन अपिरवधारणे परकीयात्वमेवेत्यर्थः । विरक्तायामतिव्याप्तिवारणाय विशेष्यं उभयानुरागवत्याः परकीयात्वं मन्यमानः शङ्कते । नचेत्यादि । अव्याप्तिः सत्यन्ताभावादित्यर्थः । उत्तरमाह । अत्रेत्यादि । तस्याः कुत्रान्तर्भाव इति अत आह । तस्याश्चेत्यादिति । ऋजवस्तूक्तलक्षणस्य प्रत्यक्षाविषयकत्वात्तज्ज्ञानाय तस्याश्चेष्टामाह । अस्याश्चेष्टेत्यादि भर्तुः विधिवत्पाणिग्रहणकर्तुः शुश्रूषा । परिचर्या मुग्धादि-

१ भर्तुः शुश्रूषेति काशीमुद्रितपुस्तकेऽधिकम् । टीकायां व्याख्यातमेव ।

गतागतकुतूहलं नयनयोरपाङ्गावधि
स्मितं कुलनतभ्रुवामधर एव विश्राम्यति ॥
वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः
कदाचिदपि चेत्तदा मनसि केवलं मज्जति ॥ ३ ॥

---

पतिशुश्रूषायोग्यत्वादज्ञानादिप्रतिबद्धतद्वत्वाद्वा एतच्चेष्टा संगतिः । शीलस्य सद्वृत्तस्य । शीलं स्वभावे सद्वृत्ते इति विश्वः । संरक्षणमन्यथाकरणं आर्जवमकौटिल्यं क्षमा शान्तिः । ननु लक्षणज्ञानात् ( १ ) किं फलमिति चेदितरव्यावृत्त्यादिकमेवेति गृहाण । चेष्टामेवोदाहरणमुखेनाह यथेत्यादिना ।

कुलनतभ्रुवां कुलस्यान्वयस्य । संततिर्गोत्रजननकुलान्यभिजनान्वयावित्यमरः । नते नम्रे मदनचापवत् इति भावः । भ्रुवौ ऊर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियावित्यमरः । यासां ताः कुलनतभ्रुवः तासां यद्वा कुले स्वजने नतभ्रुवः नम्रदृष्टयः किं पुनरन्यत्रेति भावः । नयनयोर्नेत्रयोः । लोचनं नयनं नेत्रमित्यमरः । गतागतकुतूहलं गतं प्रेरणमागतमाकुञ्चनं तद्विषयकं यत्कुतूहलं कुतुकं । कुतुकं च कुतूहलमित्यमरः । कुतूहलं कदाचिदेव भवति न सर्वदेति गतागतयोः कदाचित्कत्वं तत्रापि तदप्येकं न वहूनीति व्यासङ्गान्तरोत्पत्तिभीतिद्वारा भर्तुः शुश्रूषा व्यज्यते अपाङ्गावधि नेत्रप्रान्तौ । अपाङ्गौ नेत्रयोरन्तावित्यमरः । तदवधि तत्परिच्छिन्नं । परिच्छेदे विलेवधिरित्यमरः । यद्वा अपगतानि अङ्गानि यस्येत्यपाङ्ग अनङ्ग इत्यर्थः तदवधि तावत्पर्यन्तं एवं च नयनयोः कदाचिदेव गतागतं तदपि नायकमनोविकारपर्यन्तमिति भावः । कुलनतभ्रुवामित्यग्रेप्यन्वेति स्मितं न तु हसितं तदप्यधर एवाधरोष्ठे एव न तु गण्डादिषु विश्राम्यति विश्रान्तिं याति न तमुल्लङ्घ्य गच्छतीत्यर्थः अन्योपि यो यत्र विश्रान्तिमाप्नोति स तद्विहायान्यत्र न गच्छति इति एवं च न कदाप्यूर्ध्वोस्यहास्यमस्या इति शीलसंरक्षणमभिव्यज्यते । वचः उच्यते इति वचः वक्तुं योग्यमित्यर्थः । तदप्येकं प्रियतमश्रुतेः अतिशयेन प्रियः प्रियतमः एवं चातिशयिप्रेमवत्तया संलापयोग्यत्वं द्योत्यते तस्य श्रुतेः श्रवणस्य न तु श्रवणयोः एवं च यत्र वक्तुं युक्तस्याप्येकस्यापि वचसः संलापयोग्यप्रियतमापरश्रुतिविषयता न भवति तत्र का वार्ता अन्यश्रुतिविषयतायामिति भावः । अतिथिरेव आवेशक एव । स्यादावेशक

---

१ लक्षणज्ञानस्येति का० पा० ।

साॅ तु त्रिविधा मुग्धा मध्या प्रगल्भा च । तत्राङ्कुरितयौवना मुग्धा सा तु ज्ञातयौवना अज्ञातयौवना च सैव क्रमशो लज्जाभयपराधीनरतिर्नवोढा । सैव क्रमशः सप्रश्रया विश्रब्धनवोढा । अस्याश्चेष्टा । क्रिया ह्रिया मनोहरा कोपे मार्दवं नवभूषणे समीहा च । मुग्धा यथा

---

आगन्तुरतिथिर्ना गृहागत इत्यमरः । एवं चातिथिर्यथाक्षणमेव तिष्ठन् मानापमानयोः समस्तथासूदीरित ( १ ) वचनार्थानुष्ठानाननुष्ठानान्यतरकारिण्यपि प्रियतमे समानप्रेमशालित्वमिति क्षमावत्त्वं द्योत्यते । तथा कदाचिदपि केनापि कालविशेषेण चेद्यदिकोपक्रमः कोपस्यामर्षस्योपक्रमः आरंभः । एवं च कदापि न कोपपरिमोक्ष इति ऋजुत्वं ध्वन्यते तदा कृत्स्नं केवलमिति । त्रिलिङ्गं त्वेककृत्स्नयोरित्यमरः । मनसि हृदये मज्जति एवं च मनस्यतिगाम्भीर्यमभिव्यज्यते कोपे चात्यन्तात्पत्वम् । स्वभावोक्तिरलंकारः । तल्लक्षणं च स्वभावोक्तिश्चण्डीभादेः स्वक्रियारूपवर्णनमिति । पृथ्वी वृत्तं । 'पयोधरयुगस्फुरत्कनकयुग्मताटङ्किनी सुवर्णरुचिकङ्कणाललितभाववन्नूपुरा । सुगन्धिरुचिरालसच्छ्रवणरूपवत्कुण्डला भुजंगपतिवर्णिता हरति हन्त पृथ्वी मन ' इति तल्लक्षणात् ॥ ३ ॥

स्वीय विभागमाह । स्वीया तु त्रिविधेति । त्रैविध्यमुपपादयति । मुग्धेत्यादिना । मुग्धां लक्षयति तत्रेत्यादिना । तत्र तास्वित्यर्थः अङ्कुराः संजाता यस्येत्यकुरितं 'तदस्यसंजात 'मिति तारकादित्वादितच् । एवंभूतं यौवनं यस्या इति अङ्कुरादेव वृक्षधर्मत्वाद्यौवने वाधात् प्रत्यग्रत्वं लक्ष्यते तेन च शोभातिशयो व्यज्यते । एवं च पतिमात्रानुरागत्त्वे सति प्रत्यग्रयौवनत्वमिति फलितं मुग्धालक्षणं । तेन सामान्यवनिता प्रतिपालितासु अङ्कुरितयौवनासु नातिव्याप्तिः । मुग्धामपि विभजते । सा चेत्यादिना । अज्ञातमनवगतं यौवनं यया यस्या इति वा एवमपरत्रेति प्राञ्चः । वयं तु न ज्ञातं यौवनं यया इत्येवार्थ इति ब्रूमः स्वयंभूरित्यत्र तस्या यथा यौवनज्ञानं तथा वक्ष्यामः । अत्र चाज्ञायमानज्ञायमानविशेषितमुग्धालक्षणमेव द्वयोर्लक्षणं वेदितव्यं तामेव पुनर्व्यवहारेण विशेषयति । सैवेत्यादि । सैव अज्ञातयौवना मुग्धैव क्रमशः समयाविशेषक्रमादित्यर्थः लज्जा अधार्ष्ट्यं भयं रतेरपरिचयेन शङ्का ताभ्यां पराधीना

---

१ स्वोदीरितेति वा पाठः । २ स्वीया ।

आज्ञप्तं किलकामदेवधरणीपालेन काले शुभे
वस्तुं वास्तुविधिं विधास्यति तनौ तारुण्यमेणीदृशः ॥

न प्रधाना रतिः संभोगे यस्याः सा नवोढा नवमभिनवं यथा स्यात् तथा ऊढा भर्त्रा संभोगादिव्यापारं प्रापिता । न च क्रमश इत्यनेन विशेष्यविशेषणयोर्यथासंख्यत्वेनाज्ञातयौवना लज्जाभयपराधीनरतिर्ज्ञातयौवनाभयपराधीनरतिरिति शङ्क्यम् प्रत्येकमुभयव्यापारदर्शनात् । अत्र च लज्जाभयप्रधानरतिकत्वाज्ञायमानज्ञायमान यौवनत्वान्यतरत्वविशेषितं ( १ ) मुग्धालक्षणमेव नवोढालक्षणं वोध्यं वस्तुतस्तु तन्मात्रवृत्तिधर्मवत्वमेव तत्तल्लक्षणमिह बोध्यं तामेव पुनर्व्यवहारान्तरेण विशिनष्टि । सैवेत्यादि । सैव लज्जाभयपराधीनरत्यज्ञातयौवनामुग्धा नवोढैव क्रमेण समयविशेषणैव सप्रश्रया प्रश्रयो विनयः गात्राकुञ्चनमिति यावत् तत्सहिता यद्वा किंचिद्विश्वासं प्राप्ता विश्रब्धनवोढेत्युच्यते ननु मुग्धालक्षणं कथं ज्ञातमित्यत आह । अस्याश्चेष्टेत्यादि । क्रिया ह्रिया मनोहरा । क्रियाव्यापारः तद्विषयकया ह्रिया लज्जया मनोहरति सा सलज्जव्यापारवत्याः युक्तमेव वशीकरणत्वं कोपे क्रोधे मार्दवमल्पापनेयता नवविभूषणे नूतनाभरणे समीहा जिघृक्षा । मुग्धोदाहरणमाह आज्ञप्तमिति ।

काचित्काचित्प्रत्याह । कामदेवधरणीपालेन दीव्यतीति देवो विजिगीषासरभिको यः कामो मदनः स एव धरणीपालो महीपालस्तेन यद्यपि देवशब्दस्योपसर्जनीयत्वेन पूर्वनिपातः प्राप्तस्तथापि विजिगीषाया प्राधान्य विवक्षणान्नपूर्वनिपातः ? एवं धरणीपालशब्देपि कामपदेन कमनीयरूपताशालिनः कामिनीतनुभूमावेव वसतिरुचितेति ध्वन्यते देवपदेन विजिगीषोर्जयभूमिकापरिग्रहस्यावश्यकत्वेन तथाविधाज्ञाकरणस्यौचिती व्यज्यते । धरणीपालपदेनानुल्लङ्घनाद्यज्ञत्वमावेद्यते तृतीयया दूताद्यद्वारकस्वकृताज्ञावशाद्वास्तुविधानकार्ये शीघ्रविधेयत्वं तारुण्ये चातिशयितकामप्रेमास्पदत्वं द्योत्यते । एणीदृशः मृगलोचनायाः तनौ शरीरे । तनुपदेन संकीर्णत्वप्रतिपादनद्वारा अन्येषां दुर्गभूमित्वं तेन चावश्यकवसतियोग्यत्वं ज्ञाप्यते । शुभे कल्याणकारिणि काले समये वस्तुं वासं कर्तुं आज्ञप्तं अमात्यभूते त्वयि कामिनीतनौस्थितवती मयापि तत्रागन्तव्यमचिरादेव किं च तत्राधिवसतिं विधाय सकलजगज्जयोऽस्मद्धस्त एवेत्यवबोधितं अन्योपि राजा सामात्यो दुर्गाद्याश्रित्येतरजयं करोतीति लोके प्रसिद्धम् तारुण्यं

१ ज्ञायमानयौवनत्वान्यतरत्वेति क।० पा० ।

दृष्ट्या खञ्जनचातुरी मुखरुचा सौधाधरी माधुरी
वाचा किंच सुधासमुद्रलहरीलावण्यमामन्त्र्यते ॥ ४ ॥

---

यौवनं किल निश्चयेन वास्तुविधिं सुखविशेषशालिचिरकालावस्थितिफलदवास्तुदेवतापूजनविधिं वास्तुविधिमिति द्वितीयानिर्देशादीप्सिततमत्वप्रतिपादनेनावश्यकर्तव्यत्वमावेद्यते तेन च सुतनुतनुरमणीयत्वं विधास्यति करिष्यतीति हेतोः दृष्ट्या खञ्जनचातुरी खञ्जनस्य खञ्जरीटस्य चातुरी वैदग्धी । चतुरशब्दात् ष्यञन्तात् 'षिद्गौरादिभ्यश्चे'ति ङीषि 'यस्ये'त्यकारलोपे 'हलस्तद्धितस्ये'ति यकारलोपे रूपं । यद्यप्येणीदृश इत्यनेनैनवं दैर्घ्यचपलत्वयोः प्रतीत्या गतार्थमेतत् तथापि नीलकटाक्षविक्षेपरीतिमत्त्वं । अथ वा यथा खञ्जरीटस्य सभयविशषसंचारः तथा कटाक्षविक्षेपणं । अथ वा यथा तस्य सूक्ष्मविषयदूरदर्शित्वं तथातिसूक्ष्मवशित्वं अथ वा यथा तस्यावश्यं विधिमदेशयोगशालित्वं तथा गुणविशेषवदेकान्तविषयप्रेमशालित्वं द्योत्यत इति न तेन गतार्थमेतत् । यद्वा अत्रैणीदृक्पदं स्वपर्यायमृगीदृक्पदोपलक्षणं एवं च मृग्यते गवेष्यते न तु ततस्ततः स्वयं संचरति नतदृक् समदृक् यस्या इत्यभिधानात् क्रियाक्रियामनोहरत्वमावेद्यते वस्तुतस्तु एतीत्येणः तस्येयमिति यातायातवत्संबन्ध्युत्कीर्तनेन स्वतस्तदभावेन तदेवावेद्यते इति न तच्छङ्कापि । किंच मुखरुचा वदनदीप्त्या । रुक्पदेन प्रियतमस्वांतान्तर्वर्तिक्लेशतमसो निरासत्वं व्यज्यते । सौधाधरी सुष्ठु शोभनो रसो धीयते यस्यां सा सुधा तस्या धरः सुधाधरः तस्येयं सौधाधरी 'तस्येद'मित्यण् 'टिड्ढाणञिति' ङीप् सुधाधरपदेन समीचीनग्राहकत्वं तेन च न कदापि कोपरूपमालिन्यवत्त्वमिति द्योत्यतं यद्वा सुधामप्यधरयति तिरस्करोतीति ततोप्यधिकरसवत्तया रसापकर्षककठोरकोपानङ्गीकारप्रदर्शनमुखेन कोपाल्पापनेयत्वमाविष्क्रियते माधुरी मधुरिमाचातुरीवत्साधना । किंच वाचा वक्तुं युक्ता वाक् तया वाण्या एवं च वाचि युक्तत्वरूपभूषणसत्त्वेपि सुधासमुद्रलहरीलावण्यं सुधायाः पीयूषस्य समुद्रः सागरः तस्य लहर्यः तासां लावण्यं सौन्दर्यं सुधापदेन जीवदाननिपुणत्वं समुद्रपदेन समर्यादत्वं लहरीपदेन प्रतिक्षणरसवत्त्वं च वाचि ध्वन्यते चातुरी माधुरी लावण्यपदैः चातुर्यमाधुर्यलावण्यानां मनुष्यद्राक्षादिधर्मत्वात् खञ्जनचन्द्रलहरीषु वाधात्स्वापतितमनस्कत्वाल्हादकत्वोज्जवलत्वानि लक्ष्यन्ते ॥ तैश्चालौकिकचमत्कारकारित्वचर्वणाविषयत्वसदन्तास्मिंस्तज्ज्योत्स्नावच्चनि व्यज्यन्ते. तैश्चातिदुर्लभत्वादवश्यस्पृहणीयत्व-

अज्ञातयौवना यथा—

प्रियतमहृदयाधितमो निरासकत्वानि द्योत्यन्ते दृष्टिः मुखरुक्चातुरीमाधुरीति च स्त्रीलिङ्गनिर्देशः स्त्रीणामेव स्त्रीणामाह्वानौचिती द्योत्यते । लावण्यमिति नपुंसकलिङ्गेन राजसदने सौविदल्लसत्त्वौचित्यं प्रदर्श्यते । तृतीयानिर्देशेन परस्परनिरपेक्षतया चातुर्याद्याह्वानकारित्वेन मदनमहीपतिसेवातिशयो दृष्ट्यादीनामावेद्यते । आमन्त्र्यते इदं च त्रिष्वप्यन्वेति मदनमहीपते राज्ञया अमात्येन यौवनेन कामिनीतनौ समागतमतो भवद्भिरपि तत्रागन्तव्यमित्याकार्यन्त इत्यर्थः ।

दृष्ट्यादीनामप्रेरितत्वेपि खञ्जनचातुर्याद्याकारणेन मदनमहीपतिसेवाप्रावीण्यमावेद्यते । अत्र निवासोत्सुकक्कामाज्ञप्ततारुण्यचिकीर्षितवास्तुविधानस्येतरवाक्यहेतुत्वात् । काव्यलिङ्गमलङ्कारः लक्षणं प्रागुक्तं । स च प्रस्तुतनायिकादृगादिप्रशंसनार्थं तत्तुल्यगुणा प्रस्तुतखञ्जरीटादिचातुर्यादिप्रशंसनात्तुल्ये तदन्यतुल्याक्षेपरूपा प्रस्तुतप्रशंसा प्राणितः । उक्तं च ।

'अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया' इति ।

अथ वा कथं दृष्ट्यादीनां खञ्जरीटादिचातुर्यादिसादृश्ये पर्यवसानादुपमापरिकल्पनान्निदर्शनालङ्कारः । उक्तं च ।

'अभाववस्तुसम्बन्धा उपमापरिकल्पकः । निदर्शने'ति ।

सचासम्बन्धे सम्बन्धातिशयोत्तमनुप्राणितः 'असम्बन्धे सम्बन्धातिशयोक्ति'रिति तल्लक्षणात् । एवं च व्यक्ताव्यक्तालङ्कारसंसृष्टिः । तिलतण्डुलवत् । व्यक्ताच्छायादर्शवदेव च ।

"अव्यक्ताक्षीरजलवत्पांसुपानीयवच्च सा ।
व्यक्ताव्यक्तातु संसृष्टिर्नरसिंहवदिष्यते" ॥

इति । उक्तत्वात् वृत्त्यनुप्रासश्च शब्दालङ्कारः । 'एकस्यापि सकृत्पर' इति अत्रैकस्यानेकद्विर्बहुकृत्वां वा सादृशं वृत्त्यनुप्रास इति तल्लक्षणात् । ननु वास्तुविधे विधास्यमानत्वेन सुतनुतनौ यौवनानधिष्ठाननया लक्षणसङ्गतिः कथमिति चेत् । वास्तुविधानार्थमागतस्य तारुण्यस्य तत्र सत्त्वेन प्रत्यग्रयौवनवत्त्वरूपलक्षणसङ्गतिरित्यवेहि । यद्वा । किलेति यत्सहजमेवैपीदृक् ॥ तत्रापि मदनमहीपतिप्रेरितामात्ययौवनमस्यां सुतनुतनुवसुमत्यामागत्य वसतीति कीदृशलावण्यविशेषशालिनी सेति चित्रीकरणार्थककिलशब्दयोगे विधास्यतीति "शेषे लृडयदा" विति

नीरात्तीरमुपागता श्रवणयोः सीम्नि स्फुरन्नेत्रयोः
श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति ॥
शैवालाङ्कुरशङ्कया शशिमुखि रोमावलीं प्रोञ्छति
श्रान्तास्मीति मुहुः सखीमविदितश्रोणिभरा पृच्छति ॥ ९ ॥

---

भूतकालार्थकक्तप्रत्यये वास्तुविधिपूर्वकं यौवनामात्येन तत्र वसतिः कृतेति भवद्भिरपि तत्रागन्तव्यमित्याकार्यन्तं इत्यर्थान्न कापि शङ्केति दिक्। शार्दूलविक्रीडितं छन्दः। लक्षणं तूक्तम् ॥४॥

एवं मुग्धां वयःसन्धिरूपेणोदाहृत्य विशिष्टामुदाहरति । अज्ञातयौवनायथेत्यादि नीरात् नयति तन्नीरं तस्मादुदकादित्यर्थः। तथा चाकस्मिकनितम्बगौरवादागन्तुमशक्तापि सकृल्लहरीभिरागतेतिभावः ॥ तीरं तटं ईप्सिततमत्वबोधिकया द्वितीयया सलिलविहारसंजातानपनेयकमलशैवालसंगश्रमशरीरसादवत्तया जलेति द्वेषवत्ता द्योत्यते ॥ उपागता उपसमीपमागता नतु तटं प्राप्ता। एवं चाकालिकतथाविधशंकाकवलितहृदया आर्द्रवसनपरित्यागतटस्थशाटीपरिधानादिकर्तव्यता ज्ञानशून्या जातेति ध्वन्यते। शशिमुखी शशोस्यातीति शशीतत्तुल्यमुखी। एवं च तथाविधशङ्कासञ्जातविलक्षणशोभाशालित्वं व्यज्यते । नायिकाश्रोत्रे कर्णे किमिदमुत्पलं कुवलयं न तु कुवलये । एवं च नयनयोर्विशालतातिशयो ध्वन्यते । लग्नं सम्बद्धं एवं च जलविहारवशात्संबन्धमापन्नं न तु बुद्धिपुरःसरं स्थापितमिति भावः । एवं चैतज्ज्ञानाय करन्यसनमुचितमेवेति गम्यते । इति ज्ञातुमवगन्तुं स्फुरन्नेत्रयोः श्रोत्रयोः सीम्नि मर्यादायां एकवचनेन सीम्नोः समानत्वं सप्तम्याचाधिकरणत्वप्रतिपादनद्वारा नेत्रस्फुरणधर्मवत्त्वेन वितर्को व्यज्यते। करं न्यस्यति व्यापारयति । एवं च श्रोत्रे इत्यस्य नायिकासंशयकोट्यन्तर्गतत्वेन श्रवणयोरित्यत्र कविवाक्यान्तर्गतत्वेन न पुनरुक्ति शङ्केति प्राञ्चः। तन्न। वैयधिकरण्यापत्तेः। वयं तु नीरात्तीरमुपागता एवं चावतंसयोग्योत्पलप्राप्तौचित्यं व्यज्यते। श्रोत्रे स्फुरच्छोभमानं एवं च श्रोत्रसीमासम्बन्धयोग्यत्वं ध्वन्यते । तेन च संशयौचित्यं। इदं चोत्पल एकवचनं क्षणक्षणविलक्षणशोभोत्कर्षाधाननिदानपर्याय-

---

१ पाठान्तराणि—१ तटप्राप्ता । २ व्यज्यते । ३ श्रोतयोः । ४ 'सीम्निमर्यादायाम्' इत्यारभ्य 'श्रवणयोः नेत्रयोः सीम्नि' इत्यन्तो ग्रन्थो न काशीमुद्रिते ।

ज्ञातयौवना यथा—

स्वयम्भूः शम्भुरम्भोजलोचने त्वत्पयोधरः ॥
नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति ॥ ६ ॥

न्यासौचितीं व्यनक्ति । श्रवणयोर्नेत्रयोः सीम्नि किंलग्नमिति ज्ञातुं करं न्यस्यति अर्थात्सीम्नी-त्येकवत्त्वमविवक्षितं करमित्येकवचनंनैककरस्यैवोभयत्रद्रुततरव्यापारकरणात्संभ्रमातिशयो व्यज्यत इति ब्रूमः । वस्तुतस्तु संभ्रमातिशयपोषकतया वैय्यधिकरण्यं न दोषाय । यत्तु स्फुरन्नेत्रयोः किं सीम्नि उत्पलं लग्नमिति ज्ञातुं श्रोत्रे करं न्यस्यतीत्याह तन्न ज्ञातयौवनात्वापत्तेः । किंच शैवालं जलनीली 'जलनीली तु शैवाल 'मित्यमरः । तस्याङ्कुरः तत्संशयेन समानगुणत्वादिति भावः । अङ्कुरपदं सौन्दर्यातिशयमेकवचनं चातिसूक्ष्मत्वं व्यनक्ति । रोमावलीं रोमोद्गमश्रेणीं प्रोञ्छति अवचिनोति 'उञ्छअवचयने' स्पृशतीत्यर्थः । अर्थादपरेण करेण । किंच अविदितश्रोणीभराऽविज्ञातनितम्बगौरवा जलविहारेणापि तत्सभवादिति भावः । सखीं वयस्यां श्रान्तास्मि श्रमंगतास्मि इति मुहुर्वारंवारं तारुण्याज्ञानाद्वयस्य या प्रत्युत्तरे दत्तेपि पुनः प्रश्नात्संशयातिशयो द्योत्यते । इदं च प्रागप्यन्वेति । पृच्छति जिज्ञासापूर्वं वक्तीत्यर्थः । न्यस्यति प्रोञ्छति पृच्छतीतिलटा न्यसनप्रोञ्छनप्रश्नानां वर्तमानत्वबोधनान्नयनविशालतारो-मोद्गमनितम्बगौरवाज्ञानादज्ञातयौवनात्वं बोध्यते । यद्यप्यविदितश्रोणीभरेत्यनेन अज्ञातयौवना-त्वस्य स्फुटमवगमान्नात्तमकाव्यत्वं तदंशे तथापि अन्यत्रसर्वत्रोक्तरीत्योत्तमत्वप्रदर्शनान्न तथा क्षतिः अत्र नेत्ररोमावल्योरारोप्यमाणयोरुत्पलशैवालाङ्कुरयोरज्ञातत्वलक्षणप्रकृतत्वोपयोगितया परिणामालङ्कारानुप्राणितो द्वितीयचतुर्थचरणोद्भावितः संशयालङ्कार आरोप्यमाणस्य प्रकृतोपयो-गितया परिणाम इति तल्लक्षणात् । संशयलक्षणं तु काव्यप्रकाशे ।

'स सन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः'

इति । स चासम्बन्धे सम्बन्धलक्षणातिशयोक्तिशङ्कोद्भावितभ्रान्तिमदलंकाराभ्यां संसृज्यते । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

ज्ञातयौवनामुदाहरति । ज्ञातयौवनायथेत्यादि । काचिदज्ञाततत्पतिकाज्ञातयौवनां नायिकां प्रतिवक्ति अम्भोजलोचने अम्भसि जातम्भोजं एवं च दृशि सरसित्वं द्योत्यते । तद्वल्लोचने

पा० १ 'वस्तुत' इत्यारभ्य 'ज्ञातयौवनात्तेः' इत्यन्यो ग्रन्थो न का. पु. । २ चाति-स्थूलत्वम् । ३ वयस्य मां० । ४ काव्यम् । ५ परिमाणा०

नेत्रे यस्यास्तत्सम्बुद्धिः । स्वयम्भूः स्वयम्भवतीति क्विप् अनुत्पादितः । तथा शम्भुः शं सुखं तस्मै भवतीति शम्भुः सुखोत्पादक इत्यर्थः । 'मितद्र्वादिभ्य उपसङ्ख्यान'मिति भवतेर्डुप्रत्ययः त्वत्पयोधरो भवत्कुचः कस्याविज्ञातस्य धन्यस्य सौभाग्यशालिनः नखेन करजेन चन्द्रचूडः चन्द्रवच्चन्द्रः स चूडायां मस्तके ऽस्येति सः एतादृशो भविष्यति सेत्स्यति को नाम धन्यस्तपति यन्नखे नायं चन्द्रचूडतामेष्यतीति भावः इति प्राचां व्याख्या धनस्य भाग्यवतस्तव प्रियस्य कस्य दक्षिणकरस्य वामकरस्य वा नखेन चन्द्रचूडो भविष्यतीत्यपि वदन्ति । मादृशानां तु काचित्सखीकरकलितकमलकुड्मले स्वीयकुचकोरकसमानतामालोचयमानां नायिकां प्रत्याह भो अम्भोजलोचने अम्भसि जातमम्भोजं तल्लोचयति पश्यति तत्सम्बोधनम् । 'कृत्यल्युटो बहुल'मिति बहुलग्रहणात्कर्तर्यपि ल्युट् । कमलकुड्मलनिजकुचकोरकतासमानताविचारकारिणि त्वत्पयोधरस्त्वत्सम्बन्धी पयोधर इव पयोधरः । एवं च यथा पयोधरोदयमवेक्ष्य नीलकण्ठनारी नृत्यति तद्वदस्मदादि सखीजनमनांस्येतद्दर्शनेन नर्तनमिवाचरन्ति इति द्योत्यते । यद्वा । यथा पयोधरः चिरतरसन्तापसन्तापितचातकचित्तोद्भूतानन्दजनकस्तथायमपि मदनानलकवलितकान्तस्वान्तसन्तोषपोषजनक इति ध्वन्यते । ननु मेघसाधारणधर्मवत्ताप्रतिपादनाय यौगिकताङ्गीकरणस्यावश्यकत्वादेतस्यास्त्वप्रसूततया तद्बाधात्कथमिति चेत् ।

" क्षीरनाड्यः कुमारीणां जलेन परिपूरिताः ।  
क्षीरं न भवते तस्मादार्तवं चाधिकं यतः ॥  
प्रसूतासु च नारीषु जलेन सह सूयते ।  
तेन स्रोतोविशुद्धिः स्यात् क्षीरमाशु प्रवर्तते ॥ "

इत्यायुर्वेदादप्रसूतास्तनयोरपि पयोवत्वाद्युक्तैव यौगिकता । पयोधर इत्येकवचनेनोदयसमसमयमेवान्तरशून्यत्वं किंपुनरग्रिमं तदिति व्यज्यते स्वयम्भूः न तु केनचिदुत्पादितः प्रियतमकरपरामर्शशून्य इत्यर्थः । एवं चावश्यसेवनीयत्वमावेद्यते । अथ शम्भुः सुखजनकः नतु दुःखजनकः अर्थान्निजप्रियतमस्य । एवं च सुखदुःखोभयजनकविषयविशेषवत्ता ध्वन्यते । एतादृशः सन् कस्यचित् अगणितगुणगणपुण्यसम्भारशालिनः अत एव धन्यस्य सौभाग्यवतः प्रियतमस्येति यावत् । नखेन कररुहेण चन्द्रचूडः । अपिरध्याहर्तव्यः । चन्द्र इव चन्द्रः स चूडायामस्येति नखक्षतवानित्यर्थः । चन्द्रशब्दोत्र वक्रिमाणं लक्षयन् आह्लादकत्वं व्यनक्ति

---

१ चन्द्रचूडाम् । २ 'कस्य' इति पदं न क० । ३ दर्शने । ४ चकोरचित्ताद्भूता० । ५ प्रसूतायाः । ६ विशेषवतयेदं० ।

नवोढा यथा—

हस्ते धृतापि शयने विनिवेशितापि
क्रोडीकृतापि यतते बहिरेव गन्तुम् ॥
जानीमहे नववधूरथ तस्य वश्या
यः पारतं स्थिरयितुं क्षमते करेण ॥ ७ ॥

---

चूडाशब्दोपि चूचुंकसमीपप्रदेशं लक्षयन् शोभोत्कर्षं व्यञ्जयति । भविष्यति अर्थादचिरेणैव प्रसिद्धचन्द्रचूडोऽप्युक्तविशेषणविशिष्टः । एवं चैतादृशगुणविशेषविशिष्टस्य त्वत्पयोधरस्य जलजत्वेपि तत्सङ्गपराङ्मुखेऽहिमकरकरसापेक्षोदये विरहितजनदुरन्तदुःखपदे चन्द्रचूडरूपताविरहिणि कमलकुड्मले क्व समतेति भावः । अत्र श्लेषेणानुगतः पयोधरस्योपमे यस्योपमाननिष्ठचन्द्रचूडताधर्मेण सम्बन्धाचन्द्रचूडसदृश इति। प्रतिविम्बकरणान्निदर्शनालङ्कारः। तल्लक्षणं तु—

“ असम्बन्धस्तु सम्बन्धादुपम नोपमेययोः ।
प्रतिविम्बक्रियागम्या यत्र सा स्यान्निदर्शना ॥ ”

इति स च भेदेऽभेदलक्षणातिशयोक्त्युपमासङ्कीर्णवृत्तिः । वृत्त्यनुप्रासश्च शब्दालङ्कारः । यद्यप्याद्यपादे मैकारमात्रव्यञ्जनसादृश्येपि स्वरभेदेन वर्णसाम्याभावान्नानुप्रासस्तथापि स्वरसादृश्यस्यानियतत्वेन व्यञ्जनसादृश्येनैवानुप्रास इति सर्वालङ्कारिकसंमतत्वान्न किंचिद्दूषणम् । वक्रवृत्तं लक्षणं तूक्तम् ॥ ६ ॥

नवोढामुदाहरति । नवोढा यथेत्यादि । कश्चित्स्वसखायं प्राह । न केवलं मञ्चकेऽपि तु हस्ते करे धृताप्यवलम्बितापि न केवलं करावलम्बनमात्रमपि तल्पे शयनीये न तु तदन्तिके । तत्रापि न केवलं निवेशितापि तु विनिवेशितापि सम्यक् स्थापितापीत्यर्थः । न केवलं तल्पविनिवेशनमात्रमपि तु क्रोडे भुजाभ्यन्तरे न तु भुजयोः एवं च निर्गमायोग्यत्वं द्योत्यते । “ क्रोडं भुजान्तर ”मित्यमरः । कृतापि व्यापारितापि नववधूः नवोढा बहिरेव अर्थात्केलिसदनात् गन्तुं यद्वा गन्तुमेव । न तु बहिरपि स्थातुमित्यर्थः । यतते प्रयत्नं कुरुते । लटा सर्वथा प्रयत्ने विरामाभावो द्योत्यते । लज्जाभयपराधीनत्वात् नास्याविश्वास इतिभावः ।

---

पाठान्तराणि—१ पारदमिति वा पाठः । २ कञ्चुक स० । ३ नकर० । ४ न केवलमेतावन्मात्रमपि तु० । ५ प्रयत्नविरामाभावोपि० ।

विश्रब्धनवोढा यथा—

दरमुकुलितनेत्रपालिनीवीनियमितबाहुकृतोरुयुग्मबन्धम् ॥
करकलितकुचस्थलं नवोढा स्वपिति समीपमुपेत्य कस्य यूनः ॥ ८ ॥

यद्यप्येवं अथ तथापि यः अनिर्वचनीयगुणगणः कश्चन कृती पारतं पिपर्ति पारं तनोति इति वा तं चपलमित्यर्थः । " चपलो रसः सूतश्च पारते " इत्यमरः । पारदइतिपाठस्तु त्रिकाण्डीक्षीरस्वामिभिरनादृतत्वान्नादरणीयः । करेण करैकदेशेनाङ्गुल्यादिनास्थिरयितुमर्थाद् भूतले स्थिरीकर्तुं क्षमते दक्षो भवति तस्यैव प्राक्तन एवकारोत्रापि संबध्यते । वश्या आक्रमणीया भवति इति वयं जानीमहे प्रतीमः । एवं च चपलस्यैतादृशस्थिरीकरणमसंभावि यथा तथा नवोढाया अपि तदिति भावः । अत्रोपमानोपमेययोः समानधर्माणां बिम्बप्रतिबिम्बतया निर्देशात्साधर्म्येण दृष्टान्तालंकारः ।

" दृष्टान्तःपुनरेतेषां सर्वेषां प्रतिबिम्बनम् "

इतितल्लक्षणात् । स च स्वभावोप्ययनुगतः । वसन्ततिलकावृत्तम् ।

" कर्णस्फुरत्कनककुण्डलमण्डिताया भावान्विता चरणसंगतनूपुरश्रीः ॥
गन्धान्विता सुरसनावलयावनद्धाकान्तावसन्ततिलका मुदमादनोति "

इतितल्लक्षणात् ।

विश्रब्धनवोढामुदाहरति । दरमुकुलितेति । काचित्कांचित्प्रत्याह । दरमीषत् ' ईषदर्थे दरोव्ययम् ' इति विश्वः । मुकुलीभावं प्रापिते लज्जयेतिभावः । नेत्रपाल्यौ यत्र क्रियायां तथा दरमुकुलितनेत्रपालिपालिरितिस्त्रीलिङ्गनिर्देशेन लज्जौचित्यमावेद्यते ।

" मनागञ्चितपक्ष्माग्रत्रपात्रस्तकनीनिका ।
संत्रस्तोर्ध्वपुटा दृष्टिर्लज्जितालज्जिते स्त्रियः "

इतिलक्षणादियं लज्जिता दृष्टिः । यत्तु दरेण भयेनेति व्याख्याय त्रस्ता दृष्टिरियमिति मतं तत् ।

" त्रासनिष्क्रान्तमध्या च विस्तारितपुटा भिया ।
विलोलतारकाभीत्या दृष्टिस्त्का भयान्विता " ॥

पाठा०–१ ' पारद ' इतीत्यादि ' दरणीयः ' इत्यन्तं न का० पु० ।

समानलज्जामदना मध्या । एषैव चातिप्रश्रयादतिविश्रब्धनवोढा । अस्याश्चेष्टा सागसि प्रेयसि धैर्ये वक्रोक्तिः अधैर्ये परुषवाक् । यथा—

इति तल्लक्षणायोगाद्धिमतमेव । सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्येत्यत्र तु क्रोधोद्रेकोद्धतरुद्रनेत्रसमुद्भूतवीतिहोत्रदर्शनेनाकुञ्चितैव दृष्टिः ।

" आकुञ्चीकृतपक्ष्माग्रा सम्यक् चञ्चत्कनीनिका ।
या दृष्टिः कुञ्चिता सोक्ता तेजोदुःप्रेक्ष्यवस्तुनि " ॥

इतिवैजयन्ती यद्वा नीवीव नीवी " नीवीमूलधनेपि स्याद् " इतिविश्वः एवं चातिसंरक्षणीयत्वमावेद्यते । तत्र नियमितोऽनन्यकर्मकतया स्थापितः एवं च ततस्तस्य दुःपरिहारत्वं ध्वन्यते । बाहुर्यत्र तथा तथाकृतोरुयुग्मबन्धकृतः संपादितः एवं च बुद्धिपूर्वकत्वं ध्वन्यते ऊरुयुग्मस्य बन्धः परस्परसंलग्नता युग्मपदेन साहसिकसाहचर्यं व्यज्यते । बन्धपदं दृढत्वं व्यनक्ति । तेन च दुःपरिहरत्वं ध्वन्यते । तथा करकलितकुचस्थलं करेण एककरस्य कच्चंशुकग्रन्थौ नियमितत्वादर्थादपरेण करेण कलितमाच्छादितं कुचस्थलं यत्र तथा करेणेत्येकवचनेन कुचयोर्निरन्तरत्वं स्थलपदेन च निखिलहृत्प्रदेशस्याच्छादितत्वेन कुचयोरातितरामाच्छादितत्वमभिव्यज्यते नवोढा कस्य चिदभिनवानेकभाग्यसंभारवतः एवं चैतादृशनवोढासान्निध्यस्य दुर्लभत्वमावेद्यते । यूनस्तारुण्यशालिनः समीपमन्तिकं उपेत्यासाद्य स्वपिति निद्रा इति एवं चैतादृशी नवोढा स्वापमात्रस्य दुर्लभत्वं किमु वाच्यं तद्रतिविलसितस्येतिभावः । अत्र स्वभावोक्तिरलङ्कारः । स च युवसमीपस्वापस्य पादत्रयार्थहेतुत्वात्काव्यलिङ्गानुप्राणितः । पुष्पिताग्रावृत्तं । द्विजवरकररज्जुकर्णपूरौ प्रथमतृतीयपादौ यदाभवेतां । गुरुपदगुरुरज्जुकर्णयुक्तौ यदि चरणावपरौ च पुष्पिताग्रा ॥ ८ ॥

प्राप्तावसरत्वान्मध्यामुदाहर्तुं तल्लक्षणमाह । समानेत्यादि । समानौ समबलतयोपरुद्धःपरस्फुरत्प्रसरौ लज्जामदनौ यस्याः सा न्यूनाधिकभावशून्यमदनलज्जावत्त्वमिति फलितोर्थः लज्जात्वमात्रस्य मुग्धायामप्रसक्तत्वात् । मदनवत्त्वं तद्वत्त्वमात्रं च कुलटादावतस्तदुभयं तच्च प्रगल्भायामतः समानेति । तत्र च मदनस्याधिकत्वात् मध्येति लक्ष्यनिर्देशः एषैव

पाठा०–१ आकुञ्चपुटपक्ष्माग्रा । २ हृत्प्रदेश० । ३ " अयुजि नयुगरेभतो यकारो युजि च न जौ जरगाश्च पुष्पिताग्रे " तिवृत्तलक्षणम् । ४ द्विजपदगुरुरज्जुकर्णयुक्तौ० ।

स्वापे प्रियाननविलोकनहानिरेव स्वापच्युतौ प्रियकरग्रहणप्रसङ्गः ॥
इत्थं सरोरुहमुखी परिचिन्तयन्ती स्वापं विधातुमपि हातुमपि प्रपेदे ॥ ९ ॥

---

चातिप्रश्रयादतिविश्रब्धनवोढेति क्वाचित्कः पाठस्त्वतीव धाष्ट्र्याभाववत्यां तस्यां धाष्ट्र्याप्रयुक्तमध्याव्यवहारासंभवादनुदाहृतत्वाच्चानुपादेयः । वस्तुतस्तु अत्यन्तधाष्ट्र्याभाववत्त्वे प्रमाणाभावान्न दोषः । लक्षणज्ञानाय चेष्टामाह । अस्याश्चेष्टेति । सागसि सापराधे । "आगोपराधो मंतुश्च" इत्यमरः । प्रेयसि प्रियतमे सतीतिशेषः । धैर्ये धैर्यवत्त्वे वक्रोक्तिः श्लेषेण काक्वा वा अर्थान्तरप्रत्यायकं वचनं यस्या इत्यर्थः । वक्रवाक्यप्रबन्धिकेति यावत् । अधैर्ये धैर्याभावत्वे परुषवाक् परुषा निष्ठुरा वाक् यस्याः सा ।

मध्यामुदाहरति स्वाप इत्यादि । काचित्कांचित्प्रत्याह । स्वापे निद्रायां प्रियाननविलोकनहानिरेव प्रियस्य न तु पतिमात्रस्य । एवं च विलोकनेऽवश्यकर्तव्यत्वं व्यज्यते । आननं वदनं तस्य विलोकनं प्रेक्षणं तस्य हानिरेव नाश एव । एवं चैतत्कालीनीप्रियतममुखदर्शनस्याग्रे दुःप्रापत्वं ध्वन्यते । हानिपदेनासह्यत्वमावेद्यते । एवं च मदनरसरभसवशात् प्रियतमवदनावलोकने विघ्नीभूतनिद्रावसरे जीवननैष्फल्यं मन्यत इति द्योत्यते तथा स्वापच्युतौ निद्रात्यागे प्रियकरग्रहणप्रसंग एवेत्येवकारोत्रापि योज्यः । प्रियकरग्रहणं रत्यर्थमित्यर्थः । अत्रापि प्रियपदमनिषेध्यत्वं करपदं च करोतीति व्युत्पत्त्या तद्ग्रहणेन्यानिवारकाभावतया रतप्रसक्तेरविचारणीयत्वं व्यञ्जयति । एवकारश्च कार्यान्तरप्रसराभावं व्यञ्जयति । नन्वप्रियपदद्वयोपादानात् कथितपदत्वं दोष इति वाच्यं तथा वदनविलोकनेऽवश्यकर्तव्यत्वे प्रियत्वं प्रयोजकं तथैव करग्रहणानिषिध्यत्व इति व्यञ्जयितुं तदुभयोपादानात्—

"उदेति सविता ताम्रस्ताम्र एवास्तमेति च"

इतिवत् प्रत्युतानुगुणत्वं तस्य प्रसंगः पुनःपुनः कर्तव्यत्वमित्यर्थः । एवं चानिवारणीयत्वं ध्वन्यते । स्वापच्युतिरपि प्रियकरग्रहणप्रसंगायैव स्यादित्यर्थः । इत्थं परिचिन्तयन्ती यदि क्रियेत स्वापस्तदाप्रियतमवदनविलोकनहानिरूपानिष्टमापद्येत यदि च न क्रियेत तदा प्रियकरग्रहणनिवारणकृतलज्जा हानिरूपानिष्टमापद्येतत्युभयतः पाशपात एवेति किमनयोर्ज्यायः इति विशेषतः स्वमनस्येव विचारयन्ती सरोरुहमुखी कमलवदना । सरोरुहपदं जडत्वं तच्च चिन्तातिशयं व्यञ्जयति । स्वापं निद्रां विधातुं लज्जात्यागस्य दुष्करत्वादितिभावः ।

---

पाठान्त०—१ प्रवर्तिकेति० । २ करपदादि व्यञ्जयनीत्यन्तो ग्रन्थो न का० ।

पतिमात्रकेलिकलापकोविदा प्रगल्भा । वेश्यायां च कुलटायां च पतिमात्रविषयत्वाभावान्न तत्रातिव्याप्तिः । अस्याश्चेष्टौ रतिप्रीतिरानन्दात्संमोहः । प्रथमा यथा—

संस्पृश्य स्तनमाकलय्य वदनं संश्लिष्य कण्ठस्थलं
निष्पीड्याधरबिम्बमम्बरमपाकृष्य व्युदस्यालकम् ॥

---

हातुं त्यक्तुमपि प्रियवदनविलोकनहानेरसिद्धत्वादिति भावः । प्रपेदे अनिष्टसंपातभीतिव्याकुला बभूवेत्यर्थः । अत्र च विधानहानाभ्यां तुल्यबलतया लज्जामदनसाम्यवर्णनेन स्फुटैव लक्षणोदाहरणयोः संगतिः । अत्र च हानविधानयोरन्यतरनिश्चया भावेन संदेहालंकारः । स च स्वापत्यागयोर्विधेयत्वेनानिष्टसंभावनया तन्निषेधवत्येवंविधेर्व्यक्तत्वे निषेधस्यास्फुटत्वगूढाक्षेपानुप्राणितस्तु उपमयापि संसृज्यते । उक्तं च—

" गूढाक्षेपो विधौ व्यक्ते निषेधे वा स्फुटे सति "

इति । वसन्ततिलका वृत्तं लक्षणं तूक्तं प्राक् ॥ ९ ॥

लब्धावसरत्वात् प्रगल्भामुदाहर्तुं तल्लक्षणमाह पतिमात्रेत्यादि । पत्यतिरिक्तकेलिकलाभाववत्त्वे सति केलिकलाप्राविण्यवित्यर्थः । पतिमात्रपदयोः क्रमेण कृत्यमाह । वेश्यायामित्यादि कुलटापदं परकीयालक्षणं अस्याश्चेष्टाप्रदर्शनमुखेन भेदमाह । अस्यास्त्विति । भेदद्वयमित्यध्याहारः तदेवाह रतिप्रीतिरानन्दात्संमोह इति । रतौ संभोगे प्रीतिः । इतरापेक्षया यस्या इत्यर्थः । आनन्दात्सुखात्संमोहोऽज्ञता तद्वतीत्यध्याहारः । एवं च एतदन्यतरविशेषितं प्राक्तनलक्षणमेव द्वयोर्लक्षणं वेदितव्यं ननु यथा मुग्धासामान्योदाहरणमुक्त्वा तद्भेदप्रदर्शनं कृतं । तथात्राकरणात् भीतिविरोधः इतिचेन्न । नह्ययं नियमः अत एव परकीयायाः सामान्योदाहरणमनुक्त्वापि विशेषोदाहरणकरणम् । यत्तु प्रगल्भायाश्चेष्टामाह अस्यास्त्विति व्याख्यानं तन्न प्रथमायथेत्यादि ग्रन्थास्वरसात् चेष्टाभेदाद्भिन्नोदाहरणप्रदर्शन भर्तुः शुश्रूषेत्यादावपि तद्वत्त्वनिबन्धनभिन्नोदाहरणप्रदर्शनापत्तेश्च ।

---

पाठा०—१ 'अस्यास्तु रति०' इति एकस्मिन्पुस्तके । २ पत्यतिरिक्तेत्यादि वेश्यायामित्याद्यन्तो ग्रन्थो नैकस्मिन् पु० ।

देवस्याम्बुजिनीपतेः समुदयं जिज्ञासमाने प्रिये
वामाक्षीवसनाञ्चलैः श्रवणयोर्नीलोत्पलं निह्नुते ॥ १० ॥

आद्यामुदाहरति संस्पृश्येति स्तनं संस्पृश्यात्यन्तं स्तनसंमर्दनं विधायेत्यर्थः । स्तनमित्येकवचनं पीनतातिशयं व्यनक्ति । वदनमाकलय्य स्वमुखेन चुम्बनार्थं संयोज्यर्थः । आकलय्येतिपदं प्रीत्यतिशयमावेदयति कण्ठस्थलं कण्ठप्रदेशं समालिङ्ग्य सम्यगालिङ्ग्य । एवं च दृढालिङ्गनता व्यज्यते । तद्व्यतिरेकेण तस्यासंभवात् । आलिङ्गनं चैतत् दुग्धजलाभिधं—

" अङ्केस्थिता च शयने मृगशावकाक्षी गात्रे प्रियस्य विशतीव निजान्तरङ्गात् । गाढोपगूहनवशेन निरंतरं यत् संश्लेषमाहुरिह मुग्धजलाभिधानम् "

इति तल्लक्षणात् । यद्वा जघनोपश्लेषाख्यमेतत् । उक्तं च—

" उरुकलिततदीयश्रोणिरस्योपरिष्टात् व्रजति यदिह नारी स्रस्तकेशोत्तरीया । करजदशनकृत्यं चुम्बनं वा विधित्सुः कथयति जघनोपश्लेषमेतन्मुनीन्द्रः "

इति । अधरबिम्बं अधरो विम्बमेवेतिरूपम् । विम्बपदमारक्ततां व्यनक्ति । यद्वा । अधरमपकृष्टं विम्बं यस्मादर्थात् सुधाकरस्य । एवं चाधरे सुधाधिकरसवत्त्वमावेद्यते । निपीयमानं विधायेत्यर्थः । निःपीयेति । ' पीङ्पान ' इत्यस्य ल्यपि । पिवतेस्तु ' नल्यपी 'ति इत्वनिषेधात् । निरा चुम्बनबाहुल्यं व्यज्यते । अम्बरं परिधानीयं अम्बरपदं नायिकायां सुधादीधितिदीप्तिछटाचमत्कारवत्कान्तिविशेषवत्तामावेदयति । एकवचनं लज्जाविरहं व्यनक्ति । स च रतिं प्रीतिमपाकृष्य परिहृत्य अलकं केशकलापं अलकपदं कमनीयतामावेदयति एकवचनं बन्धनविशेषं व्युदस्योत्क्षिप्य । एवमान्तररतप्रसंग पूर्वाङ्गीभूतबाह्यरतेनालिङ्गनादिना नायिकामुत्कण्ठयित्वेत्यर्थः । उक्तं चैतत् ।

" मोहनं नारभेत्तावद्यावन्नोत्कण्ठिता प्रिया ।
अन्यथा न सुखोत्पत्तिरशीतेक्षुकराइव " ॥

इत्युक्तत्वात् । यद्यपि आदौ रतं बाह्यमिह प्रयोज्यं तत्रापि चालिङ्गनपूर्वमेवेत्यालिङ्गनस्य पूर्वकालीनत्वाभिधानात्तत्र तदभावात्कामशास्त्रविरोधस्तथापि तथैव योजनया स परिहरणीयः । अम्बुजिनीपतेः कमलिनीनाथस्य देवस्य सूर्यस्येत्यर्थः । समुदयं सम्यक्तया

पाठा०—१ तद्व्यतिरेकेत्यादि वाक्यं नैकस्मिन्पुस्तके ।

प्राकट्यं ' न दिवा मैथुनं कुर्या 'दिति रीत्या रतेरन्तरायभूतमिति भावः । प्रिये वल्लभे जिज्ञासमाने ज्ञातुं कृतोद्योगे सतीत्यर्थः । " ज्ञाश्रुस्मृदृशां सनः " इत्यात्मनेपदम् । वामे सुन्दरेऽक्षिणी यस्याः सा नायिका वसनाञ्चलैः वस्त्रप्रान्तैः श्रवणयोः कर्णयोः तत्सम्बन्धीत्यर्थः । नीलोत्पलं नीलकमलं सूर्योदयविकासित्वात्तस्येति भावः । निह्नुते स्थगयतीति प्राञ्चः । वयं तु देवस्य क्रीडारसिकस्याम्बुजिनीपतेः कमलिनीनायकस्य समुदयं दिवारात्रिविभागज्ञापकमित्यर्थः । प्रिये प्रियरतिदातृत्वादिति भावः । जिज्ञासमाने सति रजनीसुरतेषु पद्मिनी न सुखं प्रयातीति निसर्गतः क्वचिद्दिवसे शिशुयोगतोपि साविकसत्यम्बुजिनी यथारवेरिव कामतन्त्रोक्त्या पद्मिनीनायिकास्त्वत्यन्तं दिवसीयसुरतस्य सुखातिशयप्रतिपादनाद्रात्रिशेषे बाह्यरतं विधायान्तररतार्थं कामतन्त्रनिपुणे प्रिये दिवसज्ञानाय सूर्योदयं ज्ञातुमिच्छति सतीत्यर्थः । वामाक्षी वामे वक्रे अक्षिणी यस्याः सा " वामे सव्ये प्रतीपे च ' इति विश्वः । श्रुतिगतविकसत्कमलदिदृक्षयेति भावः । वसनाञ्चलैः अञ्चलैरिति वहुत्वोक्त्याविकासरभसतया वहुप्रयत्नेन तत्संगोपनमावेद्यते । श्रवणयोः कर्णयोः तत्सम्बन्धीत्यर्थः । द्विवचनेन पर्यायेणोभयभूषणत्वप्रतिपादनात् प्रियत्वं तेन च स्वसंनिहितवृत्तित्वमुत्पले व्यज्यते नीलोत्पलं नीलकमलं गौरगण्डतटे तदवतंसस्यैव शोभोत्कर्षजनकत्वान्नीलोक्तिः निह्नुते स्थगयति । कमलविकसनेन सूर्योदयं प्रियतमो मा जानात्विति धियेति भावः । एवं च दिवसज्ञाने सत्ययं रतिविरतिं करिष्यतीति भ्रान्त्या दिवसज्ञापककमलविकसनस्थगनमकरोदिति रतिप्रीतिमत्ता ध्वन्यते । यद्वा वसनाञ्चलैः नीलोत्पलं निह्नुते नास्तीत्यपलपतीत्यर्थः । " अपलापस्तु निह्नव " इत्यमरः । अथ वा नैतन्नीलोत्पलं किं तु मदाक्षिकटाक्षसम्बधा वसनच्छटा इत्यपलपतीत्यर्थः । एवं च नीलपदमप्यर्थवत् अत एव वामाक्षीति सहृदयं उत्पलस्यानेकदलवत्वादञ्चलैरितिवहुत्वोक्तिः अत्रापि पूर्ववदेव व्यङ्ग्यमिति ब्रूमः । अत्र उदयेप्यतथ्यस्यानुदयस्यारोपणायोदयज्ञापकस्य तथ्यस्य कमलविकासस्य गोपनेनापलापेन वा अपास्त्यापह्नुतिरलङ्कारः ।

" अतथ्यमारोपयितुं तथ्यापास्तिरपह्नुतिः "

इति तल्लक्षणात् । स च रूपकानुप्राणितः ।

" तद्रूपकमभेदायमुपमानोपमेययोः "

इति तल्लक्षणात् । शार्दूलविक्रीडितं वृत्तम् । लक्षणं तूक्तम् ॥ १० ॥

पाठान्तराणि-१ ' रीत्या ' अधिक ए० पु० ।

द्वितीया यथा —

नखक्षतमुरस्थलेऽधरतले रदस्य व्रणं
च्युता बकुलमालिका विगलिता च मुक्तावलिः ॥
रतान्तसमये मया सकलमेतदालोकितं
स्मृतिः क्वच रतिः क च क च तवालिशिक्षाविधिः ११

मध्या प्रगल्भे प्रत्येकं मानावस्थायां त्रिविधा—धीरा अधीरा धीराधीरा चेति । व्यङ्ककोपप्रकाशा धीरा । अव्यङ्ककोपप्रकाशा अधीरा । व्यङ्ग्या-

आनन्दसंमोहवतीमुदाहरति । नखक्षतमिति । काचिन्नायिका कृतशिक्षाविशेषां सखीं प्रत्याह । हे आलि सखि । " आलिः सखी वयस्या चे " त्यमरः । एवं च रहस्यवार्ताकथनयोग्यता ध्वन्यते उरःस्थले एवं च किमु वक्तव्यं कुचयोरितिभावः । नखक्षतं क्षतपदेन यत्र पीडाजनकमपि न ज्ञातं तत्र का वार्ता अन्यस्येत्यानन्दसंमोहो व्यज्यते । एकवचनेन नैविड्यं तेन च रतेरतिशयशालित्वं द्योत्यते । अधरतले अधराधःप्रदेशे " तलं स्वरूपाधारयोरि " ति विश्वः । " अधः स्वरूपयोरस्त्री तलमि " त्यमरश्च । उपरिभागादधोभागस्य किञ्चित्काठिन्यादायासादत्तं दन्तक्षतं व्यथाकरमपि नावगतमिति तलपदेनावेद्यते । ' उत्सूनकं स्यादधरावखण्डे ' ज्ञेयं पीडापीडनूस्तदेवेति लक्षद्दढाणादुत्सूनंकाख्यं दन्तपदमेतत् ' अधरदल '[1] इति पाठे दलपदं कोमलत्वं लक्षयन् पीडाविशेषयोग्यत्वं ध्वनयति । एवं च कोमले व्रणस्यातिदुःखदत्वेपि तदज्ञानादानन्दसंमोह एवाभिव्यज्यते । रदस्य दशनस्य रदपदेन काठिन्यं तेन च पीडातिशयजनकत्वं गम्यते । अत्रापि संमोहः षष्ठीरतनिवृत्तावप्याद्यपीडा तुल्यपीडाप्रदत्वं व्यनक्ति । अत्रापि पूर्ववदेव व्यङ्ग्यम् । वकुलमालिका च्युता एवं च रतेरनेकप्रकारत्वं व्यज्यते । किं च इदं च सर्वत्रान्वेति । मुक्तावलिः मुक्ताहार इत्यर्थः । विगलिता त्रुटितेत्यर्थः । एवं च दृढालिङ्गनप्रदर्शनात्तदेवाभिव्यज्यते एतच्च नखक्षतादिसकलं नैकमपि पूर्वं ज्ञातमितिभावः । मया एवं च स्वानुभवमीदृशमहं निवेदयामि न जानामि भवादृशीनां गतिमिति ध्वन्यते । तेन चेतरनायिकाभ्योतिशयः स्वस्मिन्नावेद्यते । अतएव प्राञ्चः—

१ ' अधरदले ' इति पाठः । २ वैचित्र्यम् ।

व्यङ्ग्यकोपप्रकाशा धीराधीरा । इयांस्तु विशेषो मध्या धीरायाः कोपस्य गीर्व्यञ्जिका । अधीरायाः परुषवाक् । धीराधीरायाश्च वचनरुदिते कोपस्य प्रकाशके । प्रौढाया धीरायाश्च रतौदास्यं अधीरायास्तर्जनताडनादि । धीराधीरायाः रतौ

---

" अन्यास्ताः सखि योषितः प्रियतमे सर्वाङ्गलग्नेपि याः
प्रागल्भ्यं प्रथयन्ति मोहनविधावालम्ब्य धैर्यं महत् ।
अस्माकं तु तदीयपाणिकमलेप्युन्मोचयत्यंशुके
कोयं का वयमत्र किं नु सुरतं स्वल्पापि मे न स्मृतिः "

इति वर्णितवन्तोरतिप्रीतिमतीं रतान्तसमये सुरतावसानकालेन तु सुरतान्ते आलोकितं दृष्टमित्यर्थः । एवं चेदमिदमिति न विशिष्य परिचितमिति भावः । तथा सति तत्र स्मृतिः स्मरणसामान्ये क्व च इत्यपरं रतिः रतिस्मरणमित्यर्थः । क्व च रत्यपरं तव शिक्षाविधिः शिक्षायाः अर्थाद्रतिविशेषस्य विधिः कर्तव्यमित्यर्थः । क्व च क्वापीत्यर्थः । एवं च तदङ्गसङ्गमात्रादेव मम स्मरणसामान्यमपगतं किं पुनर्विदितरतस्मरणम् । किमु वा रतिविशेषविषयकत्वदीयशिक्षितस्मरणमिति भावः । इति स्मृतिः क्वचरतिरित्यादेः व्याख्यानमपव्याख्यानं—

" क्वचित्ताम्बूलाक्तः क्वचिदगरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदम् "

इत्यादि । प्राचीनोदाहृतप्रागल्भ्यप्रयुक्तसुरतवैचित्र्यकोविदत्वप्रदर्शनानुपपत्तेस्तस्मादेवमत्राभिप्रायः । प्रियतमदर्शनसमयमेव सञ्जातनवीनानेकविधरतिरीतिस्फूर्तिवशान्मया यत्राभ्यस्तरतवैचित्र्यं स्मृतम् । तत्तदीयाङ्गसङ्गजनितानन्दनिर्भरतया जायमानं दुःसहनखक्षतादिरूपवाह्यरतमपि तदव्यवहितान्तररतप्रसङ्गे विस्मृतम् । क्व तत्र सुरतजननीयानन्दप्रतिवन्धकत्वदीयमानधारणाद्युपदेशस्मरणमिति भावः । अतएव लोकेपि रणाङ्गणे युद्धरसिकः कश्चिद्विस्मृताभ्यस्तपुत्रमित्रसंगतिसुखोज्ञातव्रणवेदनाभूषादिभ्रंशो युद्धप्रतिभटदलनानुकूलशस्त्रास्त्रप्रहरणादिकमेव स्मरति न तु समयविशेषं देशविशेषे सामाद्युपायसम्भवे योद्धव्यमिति नीतिनिपुणोपदेशमित्यलं पल्लवितेन । स्वभावोक्तिरलंकारः । लक्षणं तूक्तम् । पृथिवी वृत्तम् ॥ ११ ॥

लब्धावसरत्वान्मध्याप्रगल्भे भेदान्तरैरनेकविधे इत्याह । मध्याप्रगल्भे इति मानावस्थायां मानस्य वक्ष्यमाणलक्षणस्यावस्थायां तत्प्रधानत्वेन प्रत्येकं त्रिविधे मध्याप्रगल्भापि त्रिःप्रकारे-

दास्यं तर्जनताडनादिकोपप्रकाशकं । धीरादिभेदाः स्वीयायामेव न परकीयामिति प्राचीनलेखनमाज्ञामात्रम् । धीरत्वमधीरत्वं तदुभयं वा माननियतं परकीयायां मानश्चेत्तेषामावश्यकत्वात् मानश्च न परकीयायामिति वक्तुमशक्यत्वादिति । मध्या धीरा यथा—

---

त्यर्थः । तानेव प्रकारानाह धीरेत्यादि । धैर्यवती धीरा अधैर्यवती अधीरा धैर्याधैर्यवती धीराधीरेत्यर्थः । ननु धैर्याधैर्ययोर्विरोधादत्र युगपदवृत्तित्वात्कथं तद्वत्त्वेन तद्व्यपदेश इति चेन्न ।

" वालेनाथ विमुञ्च मानिनि रुषं कोपान्मया किं कृतं
खेदोस्मासु न मेपराध्यति भवान्सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते "

इति प्राचीनोदाहरणादेकत्र वक्रोक्तिमत्वादितत्कार्योदयदर्शनात्तयोरविरोधात् । प्रथमोद्दिष्टत्वान्मध्याधीरां लक्षयति । व्यङ्ग्येत्यादि व्यङ्ग्यः व्यञ्जना वृत्तिः समधिगम्य केनचिल्लिङ्गेनानुमेय इति वा कोपप्रकाशः । कोपस्य क्रोधस्य । प्रकाशस्य तेजोधर्मत्वात्कोपे बाधात्तत्प्रादुर्भावोत्र लक्ष्यते । तेन च कोपेनौद्धत्यमावेद्यते । तथा च व्यङ्ग्यः कोपप्रकाशः क्रोधप्रादुर्भाव इत्यर्थः । यस्याः सा एवं च पतिमात्रानुरागवत्त्वे सति समानलज्जामदनवत्त्वे सति व्यङ्ग्यमात्रक्रोधप्रादुर्भावत्वविशेषितं मध्याधीरालक्षणमिह वोध्यं प्रथमात्सत्यन्तात् । परकीयादिव्युदासः । द्वितीयात्प्रगल्भाधीरादिव्युदासः मात्रपदादधीरादेः । एवमग्रेपि । धीरेति लक्ष्यनिर्देशः व्यञ्जकमेवाह । कोपस्येत्यादि । गीः शब्दइत्यर्थः । इदं चोपलक्षणम् । ये तु धीरितिं पाठमादृत्य धियः परकीयबुद्धेरप्रत्यक्षतया अव्यञ्जकतया व्यापारविशेषो लक्ष्यत इति व्याचख्युः ते निष्प्रयोजनकलक्षणाङ्गीकारप्रवणाः धीराधीरायाश्च वचनरुदिते प्रकाशिके इत्यग्रिमग्रन्थानालोचकाः । वचनं वक्रमित्यर्थः । इति तद्व्याख्याप्रवृत्तस्ववचोविरोधभीतिशून्या । अतीन्द्रियस्यापि विशुद्धमातापितृजत्वादेर्व्यञ्जकत्वमिति शास्त्रसिद्धान्तमजानन्तो नमस्या एव । मध्यामधीरां लक्षयति । अधीराया इति । परुषवागितिरुदितस्याप्युपलक्षणं । तृतीयां लक्षयति । धीराधीराइत्यादि । वचनं वक्रोक्तिः । रुदितमिति परुषवचसोप्युपलक्षकं लब्धावसरत्वात् प्रौढाधीरादिका

लोलालिपुञ्जे व्रजतो निकुञ्जे स्फारा बभूवुः श्रमवारिधाराः ॥
देहे समीहे भवतो विधातुं धीरं समीरं नलिनीदलेन ॥ १२ ॥

---

लक्षयति । प्रौढाधीरा(त्वा)स्त्वित्यादि । अत्र चेष्टाघटितलक्षणप्रदर्शनाच्चेष्टापि प्रदर्शितेति तन्न्यूनताप्रसंगादाह । धीरादिभेदाइत्यादि आज्ञामात्रं न युक्तिसहमिति भावः ॥ तदेवाह धीरत्वमित्यादि । सामंजस्यतम् माननान्तरीयकं मानव्यापकमिति यावत् ततः किमित्यत आह ॥ परकीयायां मानश्चेदिति । परकीयायां यदि मानस्तदा धीरात्वादिधर्माणामवश्यंभाव इति भावः ननु परकीयायां स एव नास्त्यत आह । मानश्चेति । प्रियापराधज्ञानरूपतत्कारणसत्वादिति भावः । ननु कन्यकायां यदि मानस्तदा मुग्धायामपि तत्तुल्यतदङ्गीकारस्यावश्यकत्वात्तन्नान्तरीयकधीरात्वादिभेदानां तस्यां संभवात्तदनभिधानान्न्यूनतेति चेद्वयोरवस्थाविशेषाघटितलक्षणलक्षितायाः कन्यकायास्तु मानवत्त्वस्य युक्तिसहत्वान्मुग्धायास्तु वयोऽवस्थाविशेषलक्षणलक्षितायास्तदसंभवात्तन्नान्तरीयकधीरात्वादिभेदानामसंभवादनभिधानमिति न न्यूनता । वस्तुतस्तु ज्ञातयौवनारूपमुग्धाभेदस्यैते भेदा भवितुमर्हन्तीति तदनभिधानान्न्यूनतैव । प्रथमं लक्षितत्वात्प्रथमतो मध्या । मध्याधीरामुदाहरति । लोलालिपुञ्ज इति काचिन्नायिका सागसं पेयां समभिदधाति । लोलालिपुञ्जे लोलाश्चपलाः भवदङ्गसौरभ्यलोलुपतयेतिभावः । ' लोलश्चलसतृष्णयोरि'ति विश्वः । अलिपुञ्जाः भ्रमरसमूहाः यत्र । अत्र संबुद्धिपदाऽनुपादानान्नायिकायाः कोपवत्त्वमावेद्यते । यद्वा लोलेति संबुद्धिः हे चञ्चल सतृष्ण इत्यर्थः । एवं चञ्चलस्वभावस्य एतादृगनुचितकार्यकारित्वं गुणानभिज्ञत्वं च तवेति द्योत्यते । अलीनां पुञ्जां यत्र पुञ्जपदेन नैविड्यमलिषु सप्तम्याचालिपुञ्जवियोगाभावो निकुञ्जे ध्वन्यते । आलिपुञ्ज आलीनां सखीनां विरोधिलक्षणया असखीनां सपत्नीनां पुञ्जो यत्रेत्यर्थः । अथ वा अलीनां पुञ्ज इति अलिपुञ्जः । तस्मिन् ध्वान्तराशिरूपइत्यर्थः । एवं चाऽन्यजनानवलोकनीयतया निःशंकबहुलकेलिविधानात् खेदातिशयो व्यज्यते । निकुञ्जे लतापिहितप्रदेशे व्रजतः तन्निवारणपुरःसरं वेगेन गच्छतः अत एव स्फाराः बहुलाः श्रमवारिधाराः श्रमेणाऽऽयासेन वारिधाराः स्वेद धाराः बभूवुः संपन्नाः । अतो भवतः तव एकवचनेनानादरो ध्वन्यते देहे शरीरे नलिनीदलेन कमलिनीपत्रेण तस्यातिशीतलत्वादिति भावः । धीरं तत्परिहारसमर्थं । मन्दमिति वा सम्यगीरयतीति समीरो वायुस्तम् एवं चैतत्समये एतस्यैव युक्तिमिति भावः । विधातुं कर्तुं




मध्याऽधीरा यथा—

जातस्ते निशिजागरो मम पुनर्नेत्राम्बुजे शोणिमा
निष्पीतं भवता मधु प्रविततं व्याघूर्णितं मे मनः ।
भ्राम्यद्भृङ्गघने निकुञ्जभवने लब्धं त्वया श्रीफलं
पञ्चेषुः पुनरेव मां हुतवह क्रूरैः शरैः कृन्तति ॥ १३ ॥

---

समीहे व्यापारयामि । अत्र लोलालिपुञ्ज इति विशेषणोपादानात् नायकविलोकनविलोलविलोचननायिकासमूहवत्त्वं ध्वन्यते तेन चाऽऽकर्षकत्वमावेद्यते । एवं चञ्चललिबाधाभवननिकुञ्जगमनखेदस्य भवानेव सह इति काकूत्थापिता विलासिनी तादृशनयनासक्तस्य तत्समूहकेलि प्रयासेन तव स्वेदोद्गमः संपन्नो न तु निकुञ्जगमनेनेति वक्रोक्तिः । यद्वा लोलालिपुञ्जे निकुञ्ज इति पदद्वयोपादानाद्भ्रमद्भ्रमरसमूहपक्षलक्षजातवातशीततरणिकिरणसरणिशून्यप्रदेशविशेषं व्रजत इति काक्वोत्थापिता प्रमदा केलिकलाकलापविकलतया तव स्वेदधाराः सञ्जाताः न तु निकुञ्जगमनेनेति वक्रोक्तिः । तया च सापराधत्वप्रकाशनमित्यलङ्कारेण कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नोऽर्थशक्त्युद्भवो वस्तुध्वनिः । न चात्रानुपयुज्यमानार्थतया लक्षणामूलध्वनित्वमिति वाच्यम् । लोलालिवारणव्याकुलतया पिहितप्रदेशस्खलद्गत्यापि स्वेदोद्गमं प्रत्युपयुज्यमानत्वात् । अत्र ।

श्लोकस्यार्द्धे तदर्द्धे वा वर्णावृत्तिर्यदि ध्रुवा ।
तदा मता मतिमता स्फुटानुप्रासता सताम् ॥

इति लक्ष्यलक्षितपुटानुप्रासानुप्राणिता वक्रोक्तिरलङ्कारः । " वक्रोक्तिः श्लेषकाकुभ्यां वाच्यार्थान्तरकल्पनम् " इति तल्लक्षणात् ।

" कर्णौ ध्वजौ दण्डमृगेन्द्रहारा भवन्ति यस्याश्चरणे समस्ते
तामिन्द्रवज्रामतिमात्रकान्तां भोगीन्द्रवक्त्रां भ्रमरं दधाराम् " ।

इति लक्षणात् । इन्द्रवज्रा वृत्तं ॥ १२ ॥

मध्यामधीरामुदाहरति । जातस्ते इति । काचित्सापराधं पतिमाह अतिचित्रमेतत् ते तव एकवचनन्तपरुषवागभिव्यज्यते निशि रात्रौ जागरो निद्राभङ्गो जातः अजनि । कान्तान्तरक्रीडावशादिति भावः । मम पुनर्नेत्राम्बुजे नेत्रकमले अम्बुजपदेन जलजन्यत्वात् तत्सम्बन्धितया रुदितमभिव्यज्यते। एकवचनेन दृशि तदागमनमार्गविलोकनप्रवणतयाऽन्यव्यापारतया एकरूप-

वत्वं तेन चात्यन्तासक्तिर्ध्वन्यते शोणिमा शोणस्य भावः। शोणिमा रक्ततेत्यर्थः। यस्य जागरस्तन्नेत्र एव रक्तत्वमुचितं इह तु विपरीतमिति चित्रं। तथा भवता त्वया प्रविततम् बहु मधु मद्यं निपीतं पीतमिति कर्मणि क्तः। "घुमास्थेती" त्वम्। अन्यथा सहेत्यर्थः। मे पुनः मम हृदयं व्याघूर्णितम् एवं चापराधाधिक्यमावेद्यते तथा भ्राम्यद्भृङ्गघने। भ्राम्यन्तश्चपलाः "वाभ्राशे" ति श्यन्। "श्यमामष्टाना"मिति दीर्घः भृङ्गाः भ्रमराः तैर्घने निविडे निकुञ्जभवने लतापिहितोदरसदने। त्वया श्रीफलं विल्वफलं। "विल्वे शाण्डिल्यशैलूषमालूरश्रीफलावपी"त्यमरः। श्रीफलस्यावयवः फलमित्युत्पन्नस्य "अवयवे च प्राण्योषधिवृक्षेभ्य" इत्यणः "फलेलुगि" तिलुक्। अत्र भ्राम्यद्भृङ्गघने श्रीफलमिति च वाच्यार्थस्य विवक्षितानुपयुज्यमानत्वात्साहश्य सम्बन्धे विलोललोचनकामिनीसमूहकुचलक्षणार्थान्तरे संक्रमणादविवक्षितवाच्यो लक्षणामूलो ध्वनिः। उक्तं च

अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ।
अर्थान्तरे संक्रमितमत्यंतं वा तिरस्कृतम्॥

इति। एवं च चञ्चललोचनाकुचकलशः प्राप्त इति व्यज्यते। यद्वा श्रियो यौवनादि लक्ष्म्याः फलं तत्संभोगादि लब्धं प्राप्तम् एष पुरोवर्ती एवं च दुःपरिहरत्वं ध्वन्यते पञ्चेषुः पञ्चेषवोऽस्येति

अरविन्दमशोकं च चूतं च नवमल्लिका
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः।

इति यद्वा मोहनशोषणादय इति मां पुनः बहुतरमतिशयेन क्रूरैररुन्तुदैः शरैर्बाणैः एवं च यत्रामर्मभेदी अनतिशयेनापि हतः अबलया बाणः सोढुमशक्यः किं पुनरेतादृश इति भावः कृन्तति भिनत्तीत्यर्थः। येन कनककलशादि निध्यादिकं लभ्यते न निवेद्यते च राज्ञेत्युक्तम् तस्य राज्ञा शरैर्भेदनं इह तु त्वया तल्लब्धं। मम च शरैर्भेदनमिति वैपरीत्यचित्रमिति भावः। यद्वा त्वया भ्रमद्भ्रमरयामिककुलसंकुले मदनमहीपतिसदननिकुञ्जेऽनर्घ्यफलमपहृतं मां तु क्रूरशरैर्भिनत्ति। एवं च यस्यैवापराधस्तस्यैव दण्डविधानमिति रीतित्यागस्तस्येतिचित्रमिति भावः। अत्रैकत्र जागरादि कारणाकथनेपि नेत्रारुणिमादिकार्यकथनादन्यत्र जागरादिकारणकथनेपि कार्याकथनात्क्रियायाः

क्रियायाः प्रतिषेधेपि फलव्यक्तिर्विभावना।
विशेषोक्तिरखंडेषु कारणेषु फला वचः॥

इति लक्षणलक्षिताभ्यां विभावनाविशेषोक्तिभ्यां प्रागुक्तलक्षणाभ्यां रूपकानुप्रासाभ्यां च

मध्या धीराधीरा यथा—

कान्तानुरागचतुरोसि मनोहरोसि
नाथोसि किं च नवयौवनभूषितोसि ॥
इत्थं निगद्य सुदृशा वदने प्रियस्य
निःश्वस्य बाष्पलुलिता निहिता दृगन्ताः ॥ १४ ॥

---

संसृष्टी विरोधालङ्कारः । उक्तं च " विरोधः सोऽविरोधेपि विरुद्धत्वेन यद्वच " इति एवं चात्र विरोधालङ्कारेण प्रियापराधप्रकाशलक्षणः कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नवस्तुध्वनिः । शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

मध्याधीराधीरामुदाहरति । कान्तानुरागेति । काचित्सापराधं पतिं प्रत्याह त्वं कान्तानुरागचतुरोसि कान्तायाः कमनीयरूपत्वेनाभिमतायाः इष्टाया इति यावत् । न तु परिणीतायाः अनुरागः । अनुरञ्जनं तत्र चतुरोसि यामिच्छाविषयीकरोषि तस्याः स्वस्मिन्नासक्तिविधाननिदानचातुर्यवानसि यद्वा कान्तायामनुरागस्तत्र चतुरोसि तस्यां । स्वविषयकानुरागहेतुभूतनानाकलाकलापवानसीत्यर्थः । यद्वा कान्त इति संबुद्धिः हे कान्त न तु प्रियतमअनुरागस्तत्र चतुरोसि अनुरागे अर्थाज्जनयितव्ये चतुरोऽसि । अनुरागवती मामीदृशकार्यकारितया अननुरागवतीं करोषि इति महच्चित्रमिति काक्वा वक्रोक्तिः । अथ वा अनुरागविषयकज्ञानवानसि तथा च स्वविषयकानुरागरहितायामपि तस्यां स्वविषयकानुरागं मन्यमानोनुरागभाक् भवसीति तिर्यग्जातितुल्य इति काक्वा वक्रोक्तिः । न केवलं तदनुरञ्जकं चातुर्यमात्रं त्वयि अपि तु अन्यददपीत्याह मनोहरोसि रमणीयोसि न केवलमेतत् द्वयमेव तदनुरञ्जकम् अपि तु अन्यदपीत्याह योग्योसि । य एव कान्तानुरागचातुर्यादयो गुणाः तस्यां त एवं त्वय्यपीति समगुणतया तद्योग्योसीति वक्रोक्तिः । अनुरागवत्यपि मादृशे जनेऽनुरागाभावमावहसीति काक्वा परुषवागभिव्यज्यते । नाथोसीति पाठे प्रभुरसीत्यर्थः । तथा चानुचितकार्यकारित्वेप्यवर्जनीयत्वं द्योत्यते न केवलमेतान्येव तद्योग्यत्वे प्रयोजकानि अपि तु अन्यदपीत्याह किं च नवयौवनभूषितोसि नवयौवनेनाभिनवोन्मादशालिवयोवस्थाविशेषेण भूषितोसि अलंकृतोसि केवलं यौवनमेव नवालङ्कारकं न श्रुतं विनयादीति वक्रोक्तिः । सुदृशा नायिकया इत्थं एवं प्रकारेणोक्त्वा निःश्वस्य निःश्वासमुत्सृज्य दुःखोद्रेकवशादनिवारणीयत्वाच्चेति भावः । प्रियस्य भर्तुर्वदने बाष्पलुलिताः पूर्णबाष्पाः दृगन्ताः दृक्प्रान्ताः

प्रौढाधीरा यथा—

नो तल्पं भजसे न जल्पसि सुधाधारानुकारागिरो
दृक्पातं कुरुषे न वा परिजने कोपप्रकाशच्छलात् ॥
इत्थं केतकगर्भगौरि दयिते कोपस्य संगोपनं
तत्स्यां देव न चेत्पुनः सहचरी कुर्वीत साचिस्मितम् ॥ १९ ॥

---

निहिताः। वसन्ततिलका वृत्तम्। अत्रापि पूर्वश्लोकवद्धनिरवगन्तव्यः उक्तलक्षणानुप्रासानुप्राणितो वक्रोक्तिरलङ्कारः । लक्षणं तूक्तं। एतेषु उदाहरणेषु मध्यात्वसङ्गतिश्चिन्त्या ॥ १४ ॥

लब्धावसरत्वात्प्रगल्भां धीरामुदाहरति। नोतल्पमिति काचित्सखी नायिकां प्रतिवदति हे केतकगर्भगौरि केतकं केतकीकुसुमं तस्य गर्भः तस्यातिगौरत्वादितिभावः। तस्माद्गौरि ततोधिकतरगौरवर्णशालिनि गर्भपदेन सखीष्वपि कोपगोपनकारितया दुर्ज्ञेयहृदयत्वमावेद्यते। तल्पं पर्यङ्कं नो भजसे सनाथयसि न केवलं प्रियतमाधिष्ठिततल्पसमीपावस्थितिः अपि तु दूरतोपि सुधाधारानुकाराः पीयूषसदृशाः अथ वा सुधायाः आधारः समुद्र इत्यर्थः तदाकाराः। लसत्सु रसवर्णावलीरित्यर्थः। अथ वा गंभीरागिरः वचो न जल्पसि वदसि एवं च न यत्र संलापोपि तत्र कालिङ्गनचुम्बनादीति रतौ दास्यमावेद्यते आस्तां संलापः अपि तु तन्नावलोकयस्यपीत्याह दृक्पातं नेत्रनिपातनमपि न वा कुरुषे बुद्धिपुरःसरविलोकनं दूरपराहतमिति भावः। इत्थममुना प्रकारेण दयिते कोपस्य प्रियतमविषयकक्रोधस्य परिजनक्रोधस्य प्रकाशच्छलान्निकटवर्तिस्वजनविषयकोपप्रदर्शनमिषात् वस्तुगत्या स्वाधीनजने न कोपि कोप इति भावः। प्रकाशस्य तेजोधर्मत्वात् कोपे बाधात् तीव्रतं लक्ष्यते तेन च दुःसहत्वं ध्वन्यते यत्संगोपनमाच्छादनमपि तस्मिन् वा तत् तदा स्यात् चेद्यदि पुनः सहचरी सह सार्द्धं चरति गच्छति अहर्निशं त्वत् समागमवतीत्यर्थः। यवादिषु चरेष्टित् करणान्ङीप् इत्थं च इयं त्वदीयनिखिलरीतिज्ञेतिभावः। एवं चैतस्याः स्मितेन कोपगोपने व्यर्थत्वान्यथात्वनिर्णयोस्माकमिति ध्वन्यते यद्व सहचरी सखीत्याहुस्तत्र सख्याः कथनोत्तरमेव ज्ञानं सहचर्यास्त्वकथनेपीति तयोर्भेदात् साचि वक्रं वदनं विवर्त्येत्यर्थः। साचिपदेन नायकं प्रति नायिकाकोपगोपनकारित्वं द्योत्यते। स्मितं हास्यविशेष एकवचनेनाल्पत्वं तेन नायिकातः सहचर्या भीतिरथवा नायिकाहृद्गतज्ञानसंगोपनं व्यज्यते। कुर्वीत विदधीत। इत्थमौदास्यशालिन्यास्तव

प्रौढा अधीरा यथा—

प्रतिफलमवलोक्य स्वीयमिन्दोः कलायां
हरशिरसि परस्या वासमाशङ्कमाना ॥
गिरिशमचलकन्या तर्जयामास कम्प-
प्रचलवलयचञ्चत्कान्तिभाजा करेण ॥ १६ ॥

प्रौढा धीराऽधीरा यथा—

---

प्रियविहितापराधजनितकोपस्य अन्यनिमित्तजत्वप्रदर्शनमिषेणाच्छादनं तदा स्यात् यदि त्वद्रहस्यविज्ञेयं प्रियविषयककोप एव एतस्या नान्यविषयक इति सूचकहसितम्। एवं चाधुना त्वत्प्रियतमेनाप्येतत् ज्ञानं अतस्त्वत्प्रसादसम्पादनाय स एवात्रायातीत्यनुमोदस्वास्माकमितो गमनायेतिभावः। यद्वा दयिते प्रियतमे मयि कोपगोपनं तदा स्यादित्यादि नायकोक्तिरेव दयितपदं कोपनस्यौचितीं ध्वनयति। केचित्तु दयिते इति सम्बुद्धिपदं मत्वा नायकोक्तिरियमित्याहुः। शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

प्रौढामधीरामुदाहरति। प्रतिफलमिति हरशिरसि शिवमस्तके इन्दोश्चन्द्रस्य कलायां शकले स्वीयमात्मीयं प्रतिबिम्बम् अवलोक्य दृष्ट्वा न तु विचार्येत्यर्थः तस्यातिस्वच्छत्वादिति भावः परस्या अन्यस्याः वासं स्थितिं नत्वागमनमात्रं आशङ्कमाना वितर्कयन्ती स्वप्रतिबिम्बानभिज्ञत्वादिति भावः। अत एव अचलकन्या पार्वती एवमविचार्यकारित्वं ध्वन्यते गिरिशं गिरिं पर्वतं श्यति उपभोगेन तनूकरोतीति गिरिशस्तं। जातोनुपसर्गेतिकः शिवम्। कम्पप्रचलवलयचञ्चत्कान्तिभाजा कम्पेन कोपावेशादितिभावः। प्रचलानि अतिशयितचाञ्चल्यभाञ्जि यानि वलयानि कङ्कणानि तेषां चञ्चन्त्यः प्रसरन्त्यः। आश्रयचाञ्चल्यादिति भावः। याः कान्तयः। नानाविधमणिमरीचयः तद्भाजा तद्युक्तेन करणेन हस्तेन तर्जयामास निरभर्त्सयत्। चक्षिङो ङित्त्वेनानुदात्तेत्वनिमित्तमात्मनेपदमनित्यमिति तर्जयतेः परस्मैपदम्। नानाविधमणिमरीचिनिचयभास्वरकङ्कणक्वाणवत्करजन्यतया तर्जनस्यातिभीतिप्रदत्वं ध्वन्यते। मालिनीवृत्तम् ॥ १६ ॥

प्रौढां धीराधीरामुदाहरति। तल्पोपान्तमिति काचित्सखीनायिकावृत्तान्तं स्वसखीं प्रति वदति सखीति संबुद्धिरध्याहर्तव्या। प्रियतमे अत्यन्तं प्रेमास्पदे नायके प्रियतमपदेनाऽवर्जनीयत्वमावेद्यते। तल्पोपान्तं पर्यङ्कसमीपदेशं न तु पर्यङ्कमुपेयुषि प्राप्तवति सति न तूपविष्टे एवं च दूरत एव

तल्पोपान्तमुपेयुषि प्रियतमे वक्रीकृतग्रीवया
काकुव्याकुलवाचि साचिहसितस्फूर्जत्कपोलश्रिया ॥
हस्तन्यस्तकरे पुनर्मृगदृशा लाक्षारसक्षालित-
प्रोष्ठीपृष्ठमयूखमांसलरुचो विस्फारिता दृष्टयः ॥ १७ ॥

दर्शनसमय एव तत्कृतापराधस्मृतिरभिव्यज्यते । वक्रीकृतग्रीवया वक्रीकृता तिर्यग्विहिता ग्रीवा मन्या यया तया सापराधस्यास्य शठस्याभिमुखमवस्थितिरपि नोचितेति कोपेनेतिभावः । तथा प्रियतमे काकुव्याकुलवाचि सति काकुर्ध्वनिविकारः । यदियं एतादृशी लक्ष्यते अतो मत्कृतापराधज्ञानात्कुपितेति भियेति भावः । अत एव व्याकुला झटिति वक्तुमशक्या अन्यथावादादिरचनयेति भावः । वाक् यस्य तस्मिन्सतीत्यर्थः । साचिहसितस्फूर्जत्कपोलश्रिया साचि तिर्यग्भूत्वा कथमयं सापराधोपि वाचालतया आत्मानमनपराधिनमिव दर्शयतीति विस्मयेन यद्धसितं न तु तोषेण अग्रे कोपाविष्करणात् तेन स्फुर्जन्ती अतिशयशालिनी कपोलयोर्गण्डयाः श्रीः शोभा यस्यास्तया तथा प्रियतमे हस्तन्यस्तकरे स्वहस्ताक्षिप्तकरे सति यदियं हसितमकरोत्तर्हि प्रसन्नैवेति रामस्यैनैवेति भावः । मृगदृशा चपलविशालनेत्रया लाक्षारसक्षालितप्रोष्ठीपृष्ठमयूखमांसलरुचः । लाक्षारसेनालक्तकेन क्षालितं निर्मलीकृतं लिप्तमिति यावत् प्रोष्ठीपृष्ठं शफरीपृष्ठं " प्रोष्ठी तु शफरीद्वयोरि "त्यमरः । तस्य ये मयूखाः किरणास्तद्वन्मांसलाः मांसलत्वस्य चेतनधर्मत्वात् दीप्तिषु बाधादाधिक्यं लक्ष्यते । तेन च दुःसहत्वं ध्वन्यते । तथाचाधिका इत्यर्थः । "सिध्मादिभ्यश्चे "ति लच् । रुचो दीप्तयो यासां ताः । प्रोष्ठीपृष्ठस्य स्वतएवारुणत्वेपि लाक्षारससंपर्कात्त्वऽत्यन्तारुणत्वं यथा तथा चक्षुषः स्वाभाविकारुणत्वेपि कोपवशादधिकारुणत्व अथ वा श्वेते अलक्तकदानेनारुण्यस्य व्यक्तता यथा तथा सितायां दृष्टौ कोपकृतारुण्यस्य व्यक्तत्वमिति भावः । प्रोष्ठीपदेन प्रियतमः कृतापराधोप्ययमकस्मादेवास्मत्करग्रहणं करोति कुतुकिनीभिरिव भवतीभिस्तूष्णीं स्थीयते किमिदमुचितं भवतीनामिति सखीजनमपि पश्यतीति चपलत्वं ध्वन्यते पृष्ठपदेन कठिनत्वमावेद्यते दृष्टयः कटाक्षा विस्फारिताः प्रसारिताः एवं च कटाक्षादेर्वैचित्र्यं द्योत्यते । कृतापराधोप्यसौ निःशङ्ककरग्रहणमकस्मादेव करोतीति कोपेनेति भावः । अत्र तादृग्दृग्रूपवस्तुना प्रियापराधवस्तुध्वनिः लुप्तोपमानुप्रासानुप्राणतः प्रियचेष्टाया वाक्यार्थं प्रति हेतुत्वात्काव्यलिंगं ' हेतोर्वाक्यपदार्थते'ति लक्षणलक्षितकाव्यलिङ्गमलङ्कारः ॥ १७ ॥

एते च धीरादिषड्भेदा द्विविधाः । ज्येष्ठा कनिष्ठा च अधीरा ज्येष्ठा कनिष्ठा च धीराधीरा ज्येष्ठा कनिष्ठा च । परिणीतत्वे सति भर्तुरधिकस्नेहा ज्येष्ठा परिणतित्वे सति भर्तुर्न्यूनस्नेहा कनिष्ठा अधिकस्नेहासु न्यूनस्नेहासु सामान्यवनितासु नातिव्याप्तिः परिणीतपदेन व्यावर्त्तनात् धीराज्येष्ठाकनिष्ठा च यथा—

एकस्मिन् शयनेसरोरुहदृशोर्विज्ञाय निद्रां तयो—
रेकां पल्लवितावगुण्ठनपटामुत्कन्धरो दृष्टवान् ॥
अन्यस्याः सविधं समेत्य निभृतव्यालोलहस्ताङ्गुलि-
व्यापारैर्वसनाञ्चलं चपलयन् स्वापच्युतिं कृतवान् ॥ १८ ॥

---

एवं धीरादिभेदानुक्त्वा सम्प्रति तेपि प्रकारान्तरेण भिद्यन्त इत्याह । एते चेति षड्भेदाः मध्याप्रौढा विषयत्वेनेत्यर्थः । इदमपि प्राचीनसंप्रदायानुरोधेन । तत्र ज्येष्ठां लक्षयति परिणीत वे सतीति । यन्निरूपितपाणिग्रहणजन्यसंस्का वत्त्वं तन्निरूपितसपत्नीप्रतियोगिकाधिकस्नेहवत्त्वमित्यर्थः । कनिष्ठालक्षणमप्येवमूह्यं लक्षणद्वये परिणीतपदव्यावर्त्यमाह । अधिकस्नेहास्वित्यादि सामान्यवनितास्विति परकीयाया अप्युपलक्षकं धीराज्येष्ठाकनिष्ठे उदाहरति । एकस्मिन्निति । काचित्सखी सखीं प्रति वदति । हे सखि सदक्षिणनायककोपवशात्स्वानपोक्षितत्वेन सरोरुहदृशोः कमलनयनयोर्नायिकयोः । सरोरुहपदेन विशालत्वं दृक्पदेन विवेचकत्वं व्यज्यते एकस्मिन् शयने तल्पे नायककृततुल्यापराधतया संजातमैत्रीकत्वादिति भावः । निद्रां स्वापं विज्ञाय तयोर्मध्ये एकां पल्लवितावगुण्ठनपटां स्वयमेव स्वभावेन यद्वा कृतापराधस्य नायकस्य दर्शनं मा भवत्विति बुद्ध्या पल्लवितः आपादतलमस्तकाविस्तारितः अवगुण्ठनपटः आच्छादनपटो यया तां । अवगुण्ठनपदेनाच्छादकत्वप्रतिपादनद्वारा व्यङ्ग्यकोपप्रकाशित्वं ध्वन्यते । पल्लवपदेन तदीयकरस्पर्शसहिष्णुत्वमावेद्यते । तेन च रतावुदासीनत्वं व्यज्यते । एतद्रीत्या मध्याप्रगल्भे अत्र वोदतव्ये इति पृथगनुदाहरणान्न न्यूनत्वशङ्का । उत्कन्धर उद्ग्रीवः न तूत्थितः कदाचिदियं द्रक्ष्यतीति भियेति भावः । दृष्टवानालोकितवान् ततोऽन्यस्याः सविधं निकटं समेत्य सम्यक् मन्दपदन्यासेनेति भावः । एत्यागत्य वसनाञ्चलं वसनप्रान्तं न तु वासः । आकस्मिकवसनसमाकर्षणे संभ्रमो

अधीरा ज्येष्ठाकनिष्ठा यथा—

अन्तःकोपकषायिते प्रियतमे पश्यन् घने कानने
पुष्पस्यावचयाय नम्रवदनामेकां समायोजयत् ॥
अर्धोन्मीलितलोचनाञ्चलचमत्काराभिरामाननां
स्मेरार्द्राधरपल्लवां नववधूमन्यां समालिङ्गति ॥ १९ ॥

---

भविष्यतीति धियेति भावः। चपलयन् शिथिलयन्नत्वाकर्षयन् कुपितायावसनाञ्चलाकर्षणे कदाचिदधिक एव कोपः स्यादिति भावः। निभृतं गुप्तं तदीयोत्तरीयवसनान्तरिततयेति भावः। व्यालोलाश्चञ्चलाः नायककरयोगादिति भावः। या हस्तांगुलयो न तु हस्तः अन्यथा कङ्कणरणत्कारेण कनिष्ठायाः स्वापच्युतिर्भविष्यतीति धियेति भावः। तासां व्यापारैश्चेष्टितैः वहुवचनेनैकतद्व्यापारेण स्वापच्युतावपि न नेत्रोन्मीलनमकरोदिति पुनःपुनस्तत्करणमतो रतावुदासीनत्वं ध्वन्यते। स्वापच्छलेनान्तर्गतकोपसंगोपनतया व्यङ्ग्यं कोपप्रकाशकत्वं व्यज्यते। यद्वा निभृतव्यालोलहस्ताङ्गुलिव्यापारैः न तु निभृतचरणाङ्गुलिव्यापारैः एवं च कनिष्ठादर्शनभियोपवेशनं व्यज्यते। विनतित्वं वा वसनाञ्चलं चपलयन्नित्यर्थः। स्वापच्युतिं निद्राभङ्गं कूलसवानकार्षीत् रिरंसयेति भावः। अत्र पूर्वार्धे क्रीडौत्सुक्याभावान्न्यूनस्नेहवत्त्वेन कनिष्ठात्वम् उत्तरार्धे क्रीडौत्सुक्यात्स्नेहाधिक्येन ज्येष्ठात्वमित्यवगन्तव्यम्। शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

अधीरा ज्येष्ठाकनिष्ठे उदाहरति। अन्तःकोप इति। काचित्सखी स्वसखीं प्राह। कोपि चतुरः प्रियतमे नायिके एकस्याः प्रीत्यतिशयाभावात् तमप् अविवक्षितार्थः। वस्तुतो ज्येष्ठातो न्यूनप्रीतिमत्वेपि अन्यापेक्षया प्रेमातिशयवत्त्वात्। कनिष्ठायामपि न तदर्थबोधः। यद्वा प्रियतमे इति काननविशेषणं प्रिये इत्यध्याहारः। कोपकषायितेव क्रोधेन कलुषीकृते तत्करोतीतिणिजन्तात्कषायशब्दा 'न्निष्ठायां सेटी' ति णिलोपः। पश्यन् परुषवचनतर्जनताडनात्तयोः कोपं प्रत्यक्षमिवाकलयन्नित्यर्थः। एकान्तयोर्मध्ये इत्यर्थः। पुष्पस्यैकत्वमविवक्षितम्। अवचयाय ग्रहणाय। नम्रवदनां अधःकृतमुखीम् स्वत एवेति भावः। अथ वा नायकं प्रति कोपादिति भावः। घने निविडे कानने अन्तः अभ्यन्तरे निविडवनमध्ये इत्यर्थः। आदावेव न निविडं तत्रापि तन्मध्यप्रविष्टया स्वचरितं किमपि न द्रष्टुं शक्यमिति धियेति भावः केचित्तु

धीराऽधीरा ज्येष्ठाकनिष्ठा च यथा—

धैर्याधैर्यपरिग्रहग्रहिलयोरेणीदृशोः प्रीतये
रत्नद्वन्द्वमनन्तकान्तिरुचिरं मुष्टिद्वये न्यस्तवान् ॥
एकस्याः कलयन् करे प्रथमतो रत्नं परस्याः प्रियो
हस्ताहस्तिमिषात्स्पृशन्कुचतटीमानन्दमाविन्दति ॥ २० ॥

---

अन्तः कोपकषायिते इत्येकपदतया व्याचख्युस्तन्मतेऽधीरात्वप्रतीतिः कथमिति विभाव्यं समायोजयत् सम्यक्तया प्रसादनपुरस्सरमित्यर्थः । अयोजयत् प्रेरयामास स्वतः पुष्पावचयाय प्रवृत्तायाः केवलविनयपुरःसरं काननमध्ये भूयान्पुष्पसमुदायस्तत्रैव पुष्पावचयं कुर्विति नियोजयामासेति भावः । एवं च नम्रवदनामित्यस्य न वैय्यर्थ्यशङ्का । ततः अद्धोन्मीलितलोचनाञ्चलचमत्काराभिरामाननाम् अर्धं स्वल्पं उन्मीलिते ये लोचने नेत्रे तयोर्ये अञ्चलचमत्काराः प्रान्तविभ्रमास्तैरभिरामं स्पृहणीयमाऽननं वदनं यस्यास्तां अर्धमुकुलितेयं दृष्टिः ।

स्तोकोन्मीलिततारायामनाकुञ्चत्पुटोभया ।
किं चिदुत्फुल्लपक्ष्माग्रा दृक् सार्धमुकुला मुखे ॥

इति तल्लक्षणात् स्मेरार्द्राधरपल्लवाम् अधरस्यार्धं अर्धाधरः । "अर्धं नपुंसक"मिति समासः । स एव पल्लव इति रूपकं स्मेरः स्मितविकस्वरो अर्धाधरपल्लवो यस्यास्ताम् । कथमियमनेन प्रतारितेति विस्मयात् स्मितकरोदिति भावः । कथमियमनभिज्ञा एतत्कृतप्रतारणमपि न जानातीति विस्मयात् स्मितमकरोदिति वा । अथ वा स्मेरं अर्धं यस्य स स्मेरार्धः तथा अधरपल्लवो यस्यास्तां इति स्मेरार्धपदेन सलज्जत्वमावेद्यते पल्लवपदेन कोमलत्वमरुणत्वं च ध्वन्यते, स्मेरार्द्राधरपल्लवामिति पाठे स्मेरपदस्य धर्मपरतया स्मेरेण स्मितेनेत्यर्थः । एवं च स्मितेऽमृतरूपत्वं द्योत्यते । स्मेरो विकसितः अर्धाधरपल्लवो यस्यास्ताम् आर्द्रपदेन सुधाद्रवरूपत्वमधरे व्यज्यत इत्यपि कश्चित् नववधूं अभिनवयौवनां नायिकां अन्यामपरां समालिङ्गति । लटा वर्तमानत्वप्रतिपादनेनातिप्रियत्वमालिङ्गने ध्वन्यते अत्रापि पूर्वोक्तरीत्या ज्येष्ठाकनिष्ठे बोध्ये । शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

धीराऽधीरा ज्येष्ठाकनिष्ठे उदाहरति । धैर्याधैर्येति । काञ्चित्कांचित्प्रत्याह । धैर्याधैर्यपरिग्रहग्रहिलयोः धैर्यमधैर्यं च धैर्याधैर्यतयोः परिग्रहोऽङ्गीकारः । तत्र ग्रहिले आग्रहशीले तयोः

अप्रकटपरपुरुषानुरागा परकीया सा द्विविधा परोढा कन्यका च कन्यकायाः पित्राद्यधीनतया परकीयता अस्यां गुप्तैव सकला चेष्टा—

---

तदाग्रहवत्योरित्यर्थः । एणीदृशोर्नायिकयोः एणीपदं चाञ्चल्यविस्तारवत्वादिकं व्यञ्जयति । प्रीतये संतोषाय अनन्तकान्तिरुचिरं दीप्तिविशेषसुन्दरं रत्नद्वन्द्वं मणिद्वन्द्वं । रत्नं मणिद्वयोरश्मजातौ मुक्तादिकेपि चेत्यमरः । मुष्टिद्वये बद्धकरद्वये मुष्टिपदेन शीघ्रग्रहणायोग्यत्वं तेन च चिरतरज्येष्ठाकुचकलशसंस्पर्शनासक्ति र्व्यज्यते न्यस्तवान् न्यासीकृतवान् परं तु प्रथमत आदौ एकस्याः कनिष्ठायाः करे हस्ते रत्नं कलयन् ग्राहयन् परस्या ज्येष्ठाया इत्यर्थः । हस्ताहस्तिमिषात् । हस्ते हस्ते गृहीत्वा इति हस्ताहस्ति तद्व्याजात् । न च समासशास्त्रेणेदं युद्धं प्रवृत्तमित्यस्मिन्नर्थेसमासविधानात् । प्रकृते च तदभावान्न समास इति वाच्यम् । वादिप्रतिवादिनी युध्यंतीति प्रयोगाद्वा वादयुद्धमिव परस्परं हस्तग्रहणे क्रियाप्रतिक्रियापक्षेपरूपयुद्धप्रवृत्तेर्भवत्येव समासः । वस्तुतस्तु 'कर्णाकर्णिप्रथित'मित्यादि महाकविप्रयोगान्न दोषः । कुचतटीं स्तनतटीं स्त्रीलिङ्गनिर्देशेन कामुकस्यातिशयितप्रेमास्पदत्वं ध्वन्यते स्पृशन् आनन्दं सन्तोषं आविन्दति प्राप्नोति । अत्रज्येष्ठाकनिष्ठे स्फुटे एव उदाहरणत्रयेपि छलमलङ्कारः । " छलमन्यानुरोधेन मुधान्यस्य प्रकाशनमिति । तल्लक्षणात् ॥ २० ॥

प्राप्तावसरत्वात् परकीयां लक्षयति अप्रकटेति । परपुरुषविषयास्फुटानुरागवत्वमित्यर्थः । अप्रकटपदोपादानात् । सामान्यवनितायां नातिव्याप्तिः । परपदोपादानान्न मुग्धायाम् यत्तु अप्रकटित इति पाठः । एवं च

" ज्ञाता मैत्री सहजमधुरा पातिभिर्लोचनान्तैः
कर्णाकर्णि प्रथितमयशोबन्धुवर्गैरभाणि ॥
सम्प्रत्येवं तदपि नमनाङ्मुञ्चति प्राणनाथं
को जानीते कुवलयदृशः कीदृशः प्रेमबन्धः " ॥

इति वर्णनाल्लोकैः परपुरुषानुरागाय क्रान्तर्भाव इति दोषापत्तेः कन्यायां तु भाविपुरुषापेक्षायां परत्वमवसेयम् मम तु वित्तमात्रानुपाधिकपरपुरुषानुरागवत्वं परकीयात्वमिति युक्तमाभाति एवं च वित्तमात्रानुपाधिकप्रकटपरपुरुषानुरागवत्याः । क्वान्तर्भाव इति न शङ्कावकाशः तां विभजतेसाचेति तामेवाह परोढेत्यादि परेणान्येनोढा परोढा परिणीता ननु परस्येयं परकीया

अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः
समीरोयं वेलानवविदलदेलापरिमलः ॥
इयं प्रावृड् धन्या नवजलदविन्यासचतुरा-
पराधीनं चेतः सखि किमपि कर्तुं मृगयते ॥ २१ ॥

---

इति योगात्परस्वत्ववत्याः परिणीताया एवं परकीयात्वमुचितं नत्त्वपरिणीताया इत्यत आह। कन्यकाया इति । पितृस्वत्ववत्तया परकीयात्वं कन्यकाया इति भावः । गुप्तापरानभिलक्षितेत्यर्थः । तत्रपरोढामुदाहरति । अयमिति । काचिन्नायिका निकुञ्जाद्युद्दीपनविभावदर्शनसमयसञ्जातपरपुरुषानुरागा भङ्ग्यंन्तरेण साकूतं सखींप्र याह । हे सखि विश्रम्भपात्रभूते आलिसखी पदेन रहस्यकथनार्हत्वं ध्यन्यते । अयं निकटवर्त्ती एवं च गतागतश्रमाभावो व्यज्यते । रेवाकुञ्जः रेवासम्बन्धीलतादिपिहितप्रदेशः रेवापदेन शीतलत्वं कुञ्जे दैनन्दिनस्नानागमनार्हतयान्यथाजनशङ्कापरिहारक्षमत्वं सङ्केति तनायकसुलभागमनार्हत्वं च द्योत्यते । कुञ्जपदेनाऽन्यानालोकनीयतया निःशङ्ककेलियोग्यता व्यज्यते कुसुमशरसेवासमुचितः मदनस्य सेवासन्तोषकजनकं कर्म विविधसुरतमितियावत् तत्र समुचितो योग्यः न तु तूष्णीमवस्थातुं द्रष्टुं वेति भावः । न केवलं कुञ्जमात्रमुद्दीपकमपित्वन्यदपीत्याह । वेलादरविदलदेलापरिमलः वेलायां यथाकालं परिपक्वतादशायामित्यर्थः । एवं च गन्धेसौरभ्यं ध्वन्यते । यद्वा वेलायां कुञ्जमर्यादायां तत्प्रान्त इति यावत् 'वेलाकालमर्यादयोरपीत्यु'भयत्राप्यमरः । वेलाब्दस्योदधिमर्यादायां प्रसिद्धावन्यत्रापि प्रयोगे न दोषः कोशादौ तथानियमाभावात् । दर ईषत् विदलंत्यो विकसन्त्य एलाः एलाफलानि तासां परिमलस्तत्सम्बन्धलब्धगन्धो यस्मिन् सः नवेति पठे नवोऽभिनवो विदलदेलापरिमलो यत्रेत्यर्थः । यद्वा नूतनविदलनवत्योयाएलास्तत्परिमलोयास्मिन्सः । एवं च सौगन्ध्यातिशयो व्यज्यते । अयं समीपवर्तीत्यर्थः । तेनापरिहरणीयत्वं ध्यन्यते । समीरोवायुरपि वरिवर्ति सम्यगरियति प्रेरयति काममिति व्युत्पत्त्यामदनबाधातिशयजनकत्वं द्योत्यते । एवं च विविधसुरतश्रमापनोदननिपुणसमीपवर्तिसमीरवत्तयापि सुरतयापि सुरतयोग्यत्वं ध्यन्यते । कुञ्जे किञ्च नवजलदविन्यासचतुरा नवा नूतनाः सजला इति यावत् । ये जलदाः पयोदास्तेषां विन्यासो रचना तत्र चतुरा निपुणा अत एव धन्या मदुपकारकत्वेन पुण्यवतीयं पुरो विलसन्ती । प्रावृट्

गुप्ताविदग्धा लक्षिताकुलटाऽनुशयानां मुदिता प्रभृतीनां परकीयायामेवान्त-

---

वर्षासमयोप्यस्ति एवं चागामिजलपिच्छलरेवातटनिकटकुञ्जस्य जनसञ्चारायोग्यतया निःशङ्क-परपुरुषसहविहारयोग्यत्वमिति भावः। स्त्रीलिङ्गनिर्देशेन नवजलदविन्यासेन निविडान्धकारसम्पादकतया स्वकर्तव्यतानुकूलकार्यकारितया सखीत्वमावेद्यते। यद्वा नवजलदसमागमशालिता इयं प्रावृट् सौभाग्यवती अहं तु परपुरुषसङ्गतिविहीनाअधन्येति ध्वन्यते। अथवा इयं नवजलदविन्यासचतुरा प्रावृट् धन्या त्वं तु परपुरुषसङ्गतिसम्पादनाऽनाभिज्ञेति। अधन्येति सख्युपालंभो द्योत्यते। एवंविधोद्दीपनविभावे सति पराधीनं श्वश्र्वाद्यनेकपरतंत्रश्चेतः किमपि विशिष्य वक्तुमशक्यं कर्तुं मृगयते एवं चेतो न तूष्णीमवतिष्ठते। परतन्त्रता चेयं विदितैव भवत्या तथा च यथा न कस्यापि ज्ञातं भविष्यति तथा कामुकोवक्ष्यमानेय इति प्रच्छन्न कामुकाभिलाषो व्यज्यते। यद्वा परस्मिन्पुरुषे अधीनं नियंत्रितं परपुरुषानुरागगुणस्यूतं चेतः। ममेतिपदानुपादानं दुःखजननोद्युक्ते मनस्याऽऽत्मीयत्वाभावमावेदयति। किमप्यऽनिर्वचनीयमनुचितं प्राणवियोगं जनयितुं मृगयते विचारयति एवं च यावत्कालमेतच्चितं न तदुत्पादयति तावन्मध्ये परपुरुषसमागमार्थं यत्नं कुरुष्व नाचेदग्रे मम जीवनमसम्भवतीति ध्वन्यत इति सखीं प्रति गुप्ततया स्वहृद्गताभिधानं लोकं प्रति तु अयं रेवाकुञ्जः रेवातीरे तपः कुर्यादिति स्मरणात् पावनत्वं ध्वन्यते कुसुमशरसेवासमुचितः कुसुमैः पुष्पैरेव न तु रत्नादिभिः शं सुखं रात्यङ्गीकरोति एतादृशस्य भक्तिमात्रप्रियस्य परमेश्वरस्याराधनोचितः तथा वेलायां क्षुद्बोधसमये नवविदलदेलागन्धः समीरोप्यस्ति। स एव तृप्तिजनको भविष्यति इत्याहारान्तरनिवृत्यापि अत्रपरमेश्वरभजनं कर्तुं शक्यमिति भावः। तथा च नवजलजविन्यासचतुरा धन्या छायासम्पादकतया तापसोपकारित्वादितिभावः। प्रावृडप्यस्ति एवं विधपरमेश्वरोपासनानुकूलपदार्थवत्यप्यस्मिन् प्रदेशे पराधीनं परः सर्वोत्कृष्टः अस्मदीयप्राणप्रियः तदधीनम् तच्चरणारविन्दासक्तं चेतः। किमपि कर्तुं मृगयत इति काक्वा न किमपि कर्तुं मृगयत इत्यर्थः एवं चास्माकं स्वाम्येवोपास्य इत्यभिधानाल्लक्षणसङ्गतिः। अत्रैवमुपन्यासरूपवस्तुना परपुरुषप्रच्छन्नानुरागित्वप्रकाशनरूपवस्तुध्वनिः। शिखरिणिवृत्तम्॥ २१॥

ननु परकीयायाः गुप्तादि भेदसत्वात्तदनभिधानान्न्यूनतेत्यतआह गुप्तेति मतिबुद्धिपूजार्थेभ्यश्चेति चकारस्यानुक्तसमुच्चयार्थकत्वाद्वर्तमानेकर्तरिक्तः। सुरतागोपनकर्तृत्वं गुप्तात्वम्

भावः । गुप्ता त्रिधा वृत्तसुरतगोपना वर्तिष्यमाणसुरतगोपना वृत्तवर्तिष्यमाणसुरतगोपना त्रितयमवियथा—

श्वश्रूः क्रुध्यतु निर्दिशन्तु सुहृदो निन्दन्तु वा यातर-
स्तस्मिन्किंतु न मन्दिरे सखि पुनः स्वापो विधेयो मया ॥
आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती
मार्जारी नखरैः खरैः कृतवती कां कां न मे दुर्दशाम् ॥ २२ ॥

---

पुंश्चलीभावनिपुणत्वं दिदग्धात्वम् जारसमूहगामित्वं कुत्सितं लटति वक्तीति व्युत्पत्या कुत्सितभाषित्वं वा कुलटात्वम् । इष्टहानिजनितानुतापवत्वमनुशयानात्वम् प्रभृतीनामिति एतत्प्रकाराणामन्यासामित्यर्थः तत्पार्थक्येनैषामनुपलंभादितिभावः । परकीयायामेवेति परोढायामेवेत्यर्थः परोढोदाहरणोत्तरमेवैतासामुदाहरणोपन्यासात्तदुदाहरणेषु श्वश्र्वादिपदोपादानाच्च गुप्तां विभजते गुप्तेति त्रैविध्यमेवाह वृत्तेत्यादि वृत्तरतमात्रगोपना वर्तिष्यमाणरतमात्रगोपना उभयगोपना चेत्यर्थः । त्रयमप्युदाहरति श्वश्रूरिति कापिपरपुरुषोपभोगचिन्हान्यपलपितुं सखीं प्रत्याह हे सखि सखीत्वेन स्वचरितकथनार्हत्वेपि तद्गोपनादत्यंतं गंभीरत्वमावेद्यते । श्वश्रू भर्तृजननी क्रुध्यतु कुप्यतु श्वश्रूपदेन तत्कृतकोपसहनयोग्यत्वं स्वस्मिन् ध्वन्यते । किंच सुहृदो मित्राणि विद्विषंतु मा प्रीणंतु सुहृत्पदेन तत्प्रीतिजनककर्मकरणयोग्यत्वेपि स्वयं तदकरणात्तत्सदनस्वापस्यातिदुःखप्रदत्वं व्यज्यते तथा यातरो देवरपत्न्यः । ‘ भार्यास्तुभ्रातृवर्गस्ययातरः स्युः परस्परमि ’ति कोशात् । निंदंतु अपवदंतु तद्वचनाकरणमेव क्रोधादित्रयहेतुः किंतु तस्मिन् ताभिरादिष्टे मंदिरे सद्मनि पुनः अन्यवारं स्वापो निद्रा नैव विधेयः कार्यः । निद्राविधाने निदानमाह आखोर्मूषकस्य ‘ उन्दुरुर्मूषकोप्याखुरि ’त्यमरः । एकवचनेनातिदुर्लभतया उड्डीनबाहुल्यमधिव्यज्यते आक्रमणाय अंगीकरणाय जिघांसयेति भावः । कोणकुहरात् गृहैकदेशसङ्कटप्रदेशात् । कुहरपदेन जागरावस्थायामपि तत्र स्थिताया अपि मार्जार्या अदर्शनमावेद्यते । तेनानिवारितत्वं च उत्फालं उड्डीनं एकवचनं सजातियत्वप्रतिपादनद्वारा नखक्षतानां नियतस्थानकत्वं व्यञ्जयति । आतन्वती विस्तारयन्ती एवमुड्डीनबाहुल्यप्रतिपादनेन नखक्षतबाहुल्यं प्रतिपाद्यते । मार्जारी बिडाली मार्जारीति स्त्रीलिङ्गनिर्देशेन पशुपुरुषकरस्पर्शाभावोपदर्शनात् स्वस्मिन् सतीत्वमावेदयति । तेन गुप्तपरपुरुषानुरागवत्वं ध्वन्वते । खरैस्तीक्ष्णैः । खरपदं दुःस-

विदग्धा च द्विविधा वाग्विदग्धा क्रियाविदग्धा च तत्रवाग्विदग्धा यथा—

निविडतमतमालमल्लिवल्लीविचकिलराजिविराजितोपकण्ठे ॥
पथिक समुचितस्तवाद्य तीव्रे सवितरि तत्र सरित्तटे निवासः ॥ २३ ॥

---

हत्वं व्यञ्जयति । खरैर्नखरैः नखोस्त्री ' नखरोस्त्रियामि 'त्यमरः । मे मम । कां कां विशिष्य वक्तुमशक्यामित्यर्थः । दुर्दशां विडम्बनाम् न कृतवती अकार्षीत् । अपि तु या दुर्दशा कृता सा ते विदितेति भावः । पुनः स्वापो न विधेय इत्यनेनैकदाऽज्ञानात् स्वापः कृतस्तेनेयमवस्था सञ्जातेति वृत्तरतगोपनात् अभयरतगोपनस्यार्थसमाजसिद्धत्वादुदाहरणसङ्गतिः । वस्तुतस्त्वार्थ-समाजसिद्धत्वादेव न तृतीयो भेद इत्याहुः अत्र ' व्याजोक्तिः शङ्कमानस्य छद्मना वस्तुगो-पनमि 'ति लक्षणलक्षितव्याजोक्तिरूपालङ्कारेण परपुरुषसम्भोगचिह्नगोपनरूपवस्तुध्वनिः । शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

विदग्धां विभजते । विदग्धाचेति । द्वैविध्यमेवाह वाग्विदग्धेत्यादि । प्रथमोद्दिष्टत्वात् वाग्वि-दग्धामुदाहरति निविडेति सङ्केतस्थलमुपदिशन्ती काचित् कश्चित्प्रत्याह । हे पथिक । पथिकपदं वसति स्थलकथनयोग्यत्वमार्गान्तरवर्तिनदीतीरनिवासयोग्यत्वं व्यञ्जयति सवितरि सूर्ये तीव्रे अतिशयिततापकारि सति मध्याह्न इत्यर्थः । एवं चाऽह्निमकरखरकरनिकरभीत्याजनसञ्चारशू-न्यतयाग्रिममार्गस्यातिदुर्गमत्वमावेद्यते । निविडतमतमालमल्लिवल्लिविचाकिलराजिविराजितोप-कण्ठे । निविडतमं अतिशयेन निविडमिति निविडतमं यद्वा अतिशयेन निविडा इति निविड-तमाः अतिशयितनैरन्तर्य्यशालिन इत्यर्थः । ये तमालाः वृक्षविशेषाः तान् वल्लन्ते वेष्टयन्ती वल्लङ्स्तृतावित्यस्मात् णिनिः । वल्लंतश्च विचकिलाश्च द्विपुरोमल्लीप्रभेदोविचाकिलः ' स्मृतो विचकिलो मल्लीप्रभेदे मदनेपि चे 'तिविश्वः तेषां राजयः श्रेणयस्ताभिर्विराजितो विभूषित उपकण्ठौन्तिकप्रदेशो यस्मिन् ' उपकण्ठान्तिकाभ्यर्णमि 'त्यमरः । निविडतमपदमन्यजनान-वलोकनीयत्वं व्यञ्जयति । वल्लिपदं यत्राचेतनयोरपि परस्परमालिङ्गनं तत्र किमु वाच्यं चेतनयोरित्यतिशयितोद्दीपकत्वं नदीतटस्य ध्वनयति । तत्र मार्गवर्तिनि यद्वा प्रसिद्धे एवं च केन पथा कथं वा तत्र गन्तव्यमिति मनसि न विधेयमिति भावः। सरित्तटे नदीतीरे अद्यदिने अद्येत्यावश्यकत्वं द्योतयति निवासः निवासतिः समुचितः सम्यक् उचितः योग्यः एवं च तत्र वसता वनौचित्यं नाशंकनीयमिति ध्वनयति तपनखरकरसन्तप्तस्य निविडच्छायशीतलजलवत्

क्रिया विदग्धा यथा—

दासाय भवननाथे वदरीमपनेतुमादिशति ॥
हेमंते हरिणाक्षी पयसि कुठारं विनिक्षिपति ॥ २४ ॥

---

प्रदेशे वसतिरुचितैवेति भावः । एवं च तपनकरसन्तप्तस्य मार्गजन्यश्रमवतः सुखावहवसतिस्थलकथकत्वेन दयाशीलत्वप्रदर्शनात् । गुप्तपरपुरुषानुरागत्वं द्योत्यते । यद्वा विराजित उपकण्ठे इति पदद्वयं च तथा च । हे विराजित । वर्तमाने क्तः । सर्वांगीणलावण्यशील सुकुमारशरीर पथिक तीव्रे सवितरि निविडतमतमालम् । मल्लिवल्लीविचकिलराजिविचकिलैः राजते शोभते । सत्सूद्विषेति क्विप् । तत्र सरित्तटे । यद्वा उपकण्ठविशेषणं एवं च निविडतमतमालसम्बन्धिविचकिलमालाशालिनीत्यर्थः । निविडतमतमालसंवन्ध्युत्कीर्तनेनाग्लानत्वं मालासुतेन च सौगन्ध्यातिशयत्वं हृदि ध्वन्यते । उपकण्ठे कण्ठस्य समीपे अर्थान्मम वक्षःस्थल इत्यर्थः । तव निवासो योग्यः सुकुमारशरीरस्य तीव्रतरतपनतापितस्य मार्गश्रान्तस्य भवतोद्य ग्रीष्मसमये । चन्द्रोपलकलशाभ्यामिव पयोधराभ्यामतिशीतलं विचकिलमालासुरभिमद्धृदयभूतलमेव तव तापहरणप्रवणमितिभावः । जनसञ्चारविरहिणि शीतलतरेत्युचिते नदीतीरमेव सङ्केतस्थलमिति पथिकं प्रति साभिप्रायवचनरचनाविशेषेण वक्तीति वाग्विदग्धेयम् । अत्रैवं वाग्रूपवस्तुना सङ्केतदानरूपवस्तुध्वनिः । नचात्रासमस्तपदप्रायावैदर्भीरीतिरिति लक्षणलक्षितायाः शृंगारोपयोवैदर्भीरीतेरनादरादोजः कान्तिमतीगौडीति लक्षणलक्षितायारौद्ररसोपयोगिन्या गौडीरीतेर्निवन्धनादनौचित्यमिति वाच्यम् । प्रायःपदेन क्वचिद्दीर्घसमासवत्वेपि तस्यानुज्ञानात् । परंतु सुकुमारकठिनवर्णवत्वादेवानयोर्भेदः । पुष्पिताग्रावृत्तम ॥ २३ ॥

क्रियविदग्धामुदाहरति ॥ दासायेति काचित्काञ्चित्प्रत्याह भवननाथे गृहपतौ न तु प्रिये एवं चैतादृशकर्मकर्तव्यस्यौचित्यं ध्वन्यते दासाय सेवकाय नत्वन्यस्मै एवं चावश्यभाविवदरीविच्छेदभिया कुठारगोपनमुचितमिति भावः । वदरीं स्वचौर्यरतस्थानभूतां कर्कन्धुर्वदरीकोलिरित्यमरः अपनेतुम् आमूलाच्छेत्तुम् आदिशति आज्ञापयति सति हरिणाक्षी चञ्चललोचना सङ्केतभङ्गभियेति भावः । यद्वा कुत्र कुठारस्त्याज्यो यत्र न केनापि ज्ञेय इति स्थलगवेषणार्थमिति भावः झटिति कुठारदूरीकरणार्थमेवेति भावः । हेमन्तऋतौ

लक्षिता यथा—

यद्भूतं तद्भूतं यद्भूयात्तदपि वा भूयात् ॥
यद्भवति तद्भवति विफलस्तव कोपि गोपनायासः ॥ २९ ॥

तत्र जलस्यातिशयितशीतलत्वे पयसि जलमध्ये न तु तीरे एवं च दुष्प्राप्यत्वं व्यज्यते कुठारं स्वधितिम् वदरीच्छेदनकारणमितिभावः। 'द्वयोः कुठारः स्वधितिः' इत्यमरः। विनिक्षिपति गोपायति गवेषयन्नपि दासो न जलं सम्भावयेत् सम्भावयन्नपि शीतिकातरतया न करं क्षिपेत् इत्येतत्कालातिक्रमे कार्यान्तरेण विस्मृतिरेव स्यादिति धिया युक्तमेव तत्र तद्गोपनमिति तूष्णीमेव स्वकार्यस्य साधकतया क्रियावैदग्ध्यम् अत्र कुठारगोपनवस्तुना स्वचौर्यरतसङ्केतनिकेतगोपनरूपवस्तुध्वनिः। उपगीतिच्छंदः॥ २८॥

लक्षितामुदाहरति। यद्भूतमिति। काचित्स्वंप्रति निवारणकारिणीमन्यत्र तद्गोपनकारिणीं सखीं प्रत्याह। हे सखि यद्भूतम् यज्जातम् विचार्य्याविचार्य वा यदनुष्ठितमित्यर्थः। तद्भूतमेव जातमेव जातस्योपायशतैरप्यनिवर्त्तनीयत्वात् सवाधकमिदमतो नकर्तव्यमित्यत्राह यद्भूयादिति। यदरिष्टं भूयाद्भविष्यति तदपि भूयादेव भविष्यत्येव भाविपदार्थस्य केनापि निवारयितुमशक्यत्वादिति भावः। ननु यद्भाव्योर्विनश्यतीति न्यायाद्दैवमात्रशरणतानोचितेत्यतआह। यद्भवति यदाचर्यते तद्भवत्याचरितव्यमेवेत्यर्थः।

अनारम्भो मनुष्याणां प्रथमं वुद्धिलक्षणम्।
आरब्धस्यान्तगमनं द्वितीयं वुद्धिलक्षणम् ॥

इति नीतिरीतिनिपुणस्मरणादेतादृशाचरणमेव नारम्भणीयम्। आरब्धेतु नोचितस्त्याग इति भावः। यद्वा भाव्यरिष्टस्यावारणीयतया यद्भवति यत्क्रियते तद्भवत्येव। कर्तव्यमेवेत्यर्थः। अरिष्टस्यावश्यंभावित्वादेतदनाचरणादाचरणमेव परमिति भावः। गोपनमपि न कार्यमित्याह। कोपि विशिष्यवक्तुमशक्योपि गोपनायासः गोपनप्रयासः विफलः व्यर्थम्। लक्षितत्वादितिभावः। यद्वा यत्कृतं तत्कृतमेव यत्क्रियते तदपि क्रियत एव। यच्च कर्तव्यं तदपि कर्तव्यमेव। एवं सति तव कश्चिदपि गोपनप्रयासो निरर्थक इत्यर्थः। आयासपदं कर्तव्यतायां सकललोकप्रथितत्वम्। तच्च लक्षितात्वम्। एवं चैतन्मया न कदापि परित्याज्यमिति व्यज्यते। तेन च कामुकविषयका सति विशेषः अथवा विदितनायिकारहस्या वयस्या वक्ति यत्कृतं तत्कृतमेव। यत्क्रियेत तत्क्रियेतैव। यत्कर्तव्यं तत्कर्तव्यमेव अर्थात्त्वया एवं च गोपनायासो व्यर्थः इत्यर्थः। एवं च सकृदनुष्ठितस्य गोपनं सम्भवति न सम्भवति। सर्वदानुष्ठीयमानस्येति ध्वन्यते।

कुलटा यथा—

एते वारिकणान्किरन्ति पुरुषान् वर्षन्ति नांभोधराः
शैलाः शाड्वलमुद्वमन्ति न सृजन्त्येते पुनर्नायकान् ॥
त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते जनान्
धातः कातरमालपामि कुलटाहेतोस्त्वया किं कृतम् ॥ २६ ॥

---

गोपीति पाठमाश्रित्यकृष्णोक्तिरित्ययमप्याहुः । अत्र नर्मस्फोटस्तु भावानां सूचनाय परेङ्गितै-रिति लक्षणलक्षितोऽनुप्रासानुप्राणितो नर्मस्फोटालङ्कारः । उद्गीतिश्छंदः । आर्याविपर्यस्तदल-त्वात् ॥ २५ ॥

कुलटामुदाहरति एतइति । काचित् स्वैरिणी । धातारमुपालभते । एतेदृश्यमानादयोपका-रित्वाभिमानिन इति भावः । अंभोधरा मेघाः । अनुपयोगिभाराधारका इति भावः । बहुवचने-नैकस्याप्युपकारिता तत्समुदायाप्रयोजकत्वमावेद्यते एवमग्रेपि । वारिकणान् जलबिन्दून् अस्म-दनुपयोगिन इति भावः । किरन्ति विक्षिपन्ति । अप्रार्थिता अपि किरन्तीति पदं हेयत्वं ध्वनयति । नैतदस्मदुपयोगीत्याह पुरुषान् जारान् पुरुषपदमुपभोगक्षमत्वं ध्वनयति । न वर्षन्ति त्यजन्ति । क्षेपणक्रियाकरणस्य स्वाभाविकत्वात्तस्याः पुरुषविषयकत्वमात्रासंपादनाद-लोकोपकारित्वस्याप्यभावात् निन्द्यत्वमम्भोधरेषु ध्वन्यते । तेनोपकारहीनाम्भोधरजनकतया वेधसोपि तद्व्यज्यते एवमग्रेपि तथा शैलाः शिलाचयाः कठिनत्वादकारुणिकाः । शाड्वलं तृणम् उद्वमन्ति प्रकटयन्ति । उद्वमनपदमतिनिन्द्यत्वमावेदयति । नैतदस्मदुपयोगीत्याह एते शैलाः पुनः नायकान् जारान् नायकपदं चातुर्यादिगुणवत्वं व्यञ्जयति न सृजन्त्युत्पादयन्ति तथा त्रैलोक्ये त्रिषु लोकेषु चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । एवं च भूमिस्थतरूणां पुरुषाजन-कत्वे प्रार्थ्यमानाः स्वर्गस्थितकल्पपादपा अपि कल्पितफलदाननिजव्रतमपहायाऽस्मदपेक्षित-जाररूपफलदानविहीनाः सञ्जाता इति स्वस्यातिदुर्दैवतां ध्वनयति । तरवो वृक्षाः ज्ञानहीनाः फलानि सुवते उत्पादयन्ति सुवत इति पदमनुपयोगित्वमावेदयति । जनान् जारान् जनपदं शान्ति-रसविमुखत्वं द्योतयति । अतः हे धातः ब्रह्मन् त्वया विश्वस्रजा एवंच को वान्यस्तिष्ठति समर्थोयं प्रत्युपालम्भ इति भावः । यस्य निखिलकार्यकरणे न कोपि श्रमस्तस्य मदपेक्षितकरणे को वा श्रमः

अनुशयाना यथा वर्तमानस्थानविघट्टनेन भाविस्थानाभावशङ्कया स्वानधिष्ठितसङ्केतस्थलं भर्तुर्गमनानुमानेनानुशयाना त्रिधा प्रत्येकमुदाहरणानि—

समुपागतवति चैत्रे निपतितपत्रे लवङ्गलतिकायाः ॥

सुदृशः कपोलपाली शिवशिवतालीदलद्युतिं लेभे ॥ २७ ॥

निद्रालुकेकिमिथुनानि कपोतपोत-

व्याधूननूतनमहीरुहपल्लवानि ॥

---

इति भावः । कुलटाहेतोः कुलटार्थे किं कृतं नकिमपीत्यर्थः इति कातरमालपामि दीनोपालम्भं वदामीत्यर्थः । एवं च दानहृदयवाञ्छाविज्ञानमात्रादेव तत्सम्पादनमुचितं महतां किं पुनस्तदीरितं संपादनीयमिति भावः । यद्वा त्वया कुलटार्थे किं कृतम् । कुत्सितं कृतमित्यर्थः । अम्भोधराद्या न केवलं नायका जनकाः प्रत्युत मदनोद्दीपकजलशीतलनूतनतृणाङ्कुराभिनवफलानि जनयन्तीति न केवलं निरर्थकत्वमपि तु दुरर्थकत्वमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

अनुशयानां विभजते वर्तमानेत्यादि वर्तमानसङ्केतनिकेतरूपेष्टहानिजनितानुतापवत्त्वमित्यादिलक्षणत्रयं बोध्यं । आद्यामुदाहरति । समुपागतवतीति । काचित् कस्याश्चित् वृत्तं स्वसखीं प्रत्याह लवङ्गलतिकायाः अनुकम्पालतालतिकेत्यनुकम्पायां कन् विगलितदलत्वादिति भावः अर्थाच्चौर्यरतसङ्केतभूतायाः । जात्यभिप्रायिकमेकवचनम् निपतितपत्रे निपतितानि स्वयमेव गलितानि पत्राणि दलानि यस्मिन् तत्र चैत्रेमासीत्यर्थः । स्वसङ्केतनिकेतभञ्जके समुपागतवति प्राप्तवति सति । सुदृशः । शोभनेदृशौ यस्याः सुष्ठु पश्यतीति वा एवं च समीचीनसङ्केतविचारव्याकुलत्वं द्योत्यते । कपोलपाली गण्डस्थली स्त्रीलिङ्गनिर्देशेन सजातीयतया दुःखवत्वस्य युक्तत्वं ध्वन्यते । शिवशिवपदं मदनबाधानिवारकतया प्रकृतौचित्यमावेदयति । द्विरुक्तिर्दुःखातिशयं व्यञ्जयति । तालीदलद्युतिं ताली वृक्षविशेषः । तस्य दलं नवोदितं पत्रमित्यर्थः । तस्य द्युतिं पाण्डुरकान्तिं लेभे इत्यनेन कान्तिप्राप्तौ श्रमायासजन्यत्वं तेनातिविरहकातीतरत्वं सङ्केतनिकेतभङ्गदुःखेनेति भावः । तालीतिस्त्रीलिङ्गनिर्देशात्सजातीयतया कुतः शीघ्रप्राप्यत्वं व्यज्यत । गीतिश्छन्दः ॥ २७ ॥

द्वितीयामुदाहरति । निद्रालुकेकीति काचित्प्रियवसतिं नीयमानां तत्र चौर्यरतसङ्केतनिकेत-

तत्रापि तन्वि न वनानि कियन्ति सन्ति
खिद्यस्व न प्रियतमस्य गृहं प्रयाहि ॥ २८ ॥
कर्णकल्पितरसालमञ्जरीपिञ्जरीकृतकपोलमण्डलः ॥

---

नाभावशङ्कया व्याकुलां नायिकां समाश्वासयति हे तन्वि कृशाङ्गि तन्विपदं चिन्तातिशयं व्यञ्जयति यतः तत्रापि प्रियवसतावपि निद्रालुकेकिमिथुनानि निद्रालूनि निद्राशीलानि ' स्पृहिगृहि ' इत्यालुच् प्रशस्ताकेका मयूरवाणी येषाम् प्रशंसायां णिनिः तेषां बर्हिणां मिथुनानि स्त्रीपुंद्वन्द्वानि येषु निद्रालुपदमाश्वस्तत्वं ध्वनयति तच्च जनसंचारशून्यत्वं तच्च गुप्तरतयोग्यत्वम् केकिपदं घनतरघनोदयजनकनिबिडतमतरुच्छायावत्वं व्यञ्जयति तच्चान्यानवलोकनीयत्वं तदपि निःशङ्ककेलियोग्यत्वम् । मिथुनपदं परस्परविरहासहिष्णुत्वं द्योतयति । तच्च विविधोद्दीपनविभाववत्वम् । तदपि च नानाविधसुरतौचित्यम् । अयं च तादृग्वने त्वदभिमतो नायको गीतिसरसरतिश्रमपरिहाराय त्वामालिङ्ग्य निद्रां सुखेन करिष्यतीति । विवक्षितान्यपरवाच्यो ध्वनिः तत्र जाराप्राप्त्या केन सह निःशङ्ककेलिरित्यत्राह कपोतपोतव्याधूतनूतनमहीरुहपल्लवानि केन मूर्ध्ना पवते विलसतीति कपोतः कलरवः सचासौ पोतश्च पवते विलसतीति पोतः अर्भकः उपसर्जनत्वाविवक्षया न पोतशब्दस्य पूर्वनिपातः तेन व्याधूता नूतना अभिनवा महीरुहपल्लवाः तरुकिसलयानि येषु तानि कपोतेत्यनेन शिरोधूननपूर्वकसविलासगतिकत्वं व्यज्यते । पोतेत्यनेन चपलविलासित्वं ध्वन्यते । तेन च वारं वारागमनयोग्यत्वम् एवं च तादृश जारविलासी त्वां कलकण्ठकूजितेन शिरोधूननेन करपल्लवचेष्टया च रमयिष्यतीति पूर्ववत् ध्वनिः । यद्वा स एव रतावधरदंशनादिना त्वां कम्पितमस्तकां धृतकरकोमलपल्लवां करिष्यतीति पूर्ववत् ध्वनिः। वनानि काननानि कियन्ति कति न सन्ति अपितु बहूनि सन्ति। अतः न खिद्यस्व दुःखं मा याहि किंतु प्रियतमस्य प्राणेश्वरस्य जारासक्तत्वेन भर्तरि प्रीत्यतिशयाभावात् । अल्पाच्च तरमित्यत्र तरपवत्तमप् स्वार्थे। गृहं सदनं प्रयाहि गच्छ अत्रोक्तलक्षणव्याजोक्तिरूपालङ्कारेण नायिकासङ्केतोपदेशप्रतीतिरूपवस्तुध्वनिः । वसन्ततिलका वृत्तम् ॥ २८ ॥

तृतीयामुदाहरति कर्णकल्पितेति। काचित्काचित्प्रत्याह कर्णे कल्पितोत्तंसी कृता सङ्केतिततरुतले मया गत्वा परावृत्तमिति राधाप्रत्ययार्थमिति भावः। रसालस्याम्रस्य तस्यैव सङ्केतित्वादिति भावः । तस्य मञ्जरीपुष्पगुच्छविशेषः । तया पिञ्जरीकृतं पिङ्गीकृतम् परागसंसर्गादिति भावः । कपोलमण्डलगण्ड स्थलं यस्यसः कर्णपदं यथेयं मञ्जरी केवलं श्रवणयोग्या तथा

निष्पतन्नयनवारिधारया राधया मधुरिपुर्निरीक्ष्यते ॥ २९ ॥

मुदिता यया—

गोष्ठेषु तिष्ठति पतिर्बधिरा ननान्दा

नेत्रद्वयस्य च न पाटवमस्ति यातुः ॥

---

त्वदुदीरितं केवलं श्रवणयोग्यमेव न त्वनुभवयोग्यमिति संङ्केतपालनराहित्यं व्यञ्जयति कल्पितपदं यथा न कथमपिरसालमञ्जर्याः परागापगमस्तथा संस्थापनेन कतिपयाधिककालावस्थापितया सङ्केतस्यातिप्रियत्वं राधायास्तथाविधप्रत्ययोत्पादनस्यावश्यकत्वं द्योतयति रसालपदं स्पृहणीयत्वं ध्वनयति । षष्ठी च विरहकातरत्वं ध्वनयति । मञ्जरीपदेन परिमलबहुत्वं व्यज्यते । स्त्रीलिङ्गनिर्देशेन सलिलग्रहणयोग्यत्वमावेद्यते । पिञ्जरीकृतपदं रसालमञ्जर्याः कर्णसङ्गमशालिन्याः प्राप्त्यभावादेचतनस्य गण्डस्यापि पाण्डुरता सञ्जायते किमुत चेतनस्येति विरहभीरुतामावेदयति । मधुरिपुर्मधोर्दैत्यस्य शत्रुः कृष्णः मधुपदमुन्मादवत्वं ध्वनयति । तच्च दुराधर्षत्वं रिपुपदं तत्प्रतियोगिकवैरवत्तयाजगद्वितवैभवत्वं व्यञ्जयति । तच्चावश्यग्राह्यदर्शनयोग्यत्वं ध्वनयति । उभाभ्यां च कठिनहृदयत्वं तच्च स्वकृतिसञ्जातसङ्केतविघातजनितमन्यतयादुष्प्रापदर्शनीयत्वं द्योतयति । अत एव निष्पतन्नयनवारिधारया निष्पतन्ती निःसरन्ती नयनयोर्नेत्रयोर्वारिधारा जलधारा यस्याः सा सङ्केतिततरुतलगमनज्ञापकमञ्जरीदर्शनेन मयैव तत्र मन्दभाग्यया न गतमिति विषादेनेतेति भावः । राधापदेन दुःखातिशयो व्यज्यते राधयति राधा एवं च मधुरिपुसङ्गमैकचित्तत्वं व्यन्यते । निरीक्ष्यते इति पदं कर्तव्यतामूढत्वं व्यनक्ति । रथोद्धता वृत्तम् ॥ २९ ॥

मुदितामुदाहरति गोष्ठेष्विति । काचित्सखी स्वनायिकासविधमेव पान्थिकं वक्ति । हे पान्थ अस्याः पतिः पातीति पतिर्भर्ता पतिपदमप्रियत्वं ध्वनयति । गोष्ठेषु गावस्तिष्ठन्त्यत्रेतिगोष्ठानि । गोष्ठं गोस्थानकं समे ' इत्यमरः । बहुवचनेन चिरप्रत्यावृत्तिकत्वं ध्वन्यते तिष्ठत्यहर्निशमिति भावः । किञ्च ननान्दा न नन्दति भ्रातृजायामिति ननान्दा भर्तृभगिनी ननान्दा पदं नियतद्वेषविशेषवत्वं व्यनक्ति । बधिरा श्रवणाभाववती । वधिरस्य प्रायेण मूकत्वात् । दृष्टमप्यनया वक्तुमशक्यमिति भावः तथा यातुः देवरपत्न्याः नेत्रद्वयस्य नेत्रयुगलस्य च चकाराच्छ्रोत्रयुगलस्येवेत्यर्थः पाटवं सामर्थ्यं नास्तीत्यर्थः इत्थं पतिरनागन्ता तद्भगिनीदेवरपत्न्योश्चाङ्गविकलत्वं तरुणी चेयं मत्सखी तस्मात्त्वयात्रस्थातव्यमिति सङ्केतद्योतकं वाक्यं निशम्य सादरं श्रुत्वा एवं च सङ्केतस्यापि प्रियत्वं ध्वन्यते । तरुणी नायिका तरुणी-

इत्थं निशम्य तरुणीकुचकुम्भसीम्नि
रोमाञ्चकञ्चुकमुदञ्चितमाततान ॥ ३० ॥

कन्यका यथा—

किञ्चित्कुञ्चितहारयष्टिसरलभ्रूवल्लिसाचिस्मितं
प्रान्तभ्रान्तविलोचनद्युतिभुजापर्यस्तकर्णोत्पलम् ॥
अंगुल्या स्फुरदंगुलीयकरुचा गण्डस्य कण्डूयनं
कुर्वाणा नृपकन्यका सुकृतिनं सव्याजमालोकते॥ ३१ ॥

---

पदं सङ्केतितनायकस्पृहणीयत्वं व्यञ्जयति। तच्चावश्यम्भाविसुरतं कुचकुम्भसीम्नि कुचौ कुम्भाविव करिगण्डाविव तयोः सीम्नि परिसरे कुम्भपदं कठिनत्वं व्यञ्जयति उदञ्चितमुत्कृष्टं रमणीयं वा रोमाञ्चकञ्चुकम् । रोमाञ्चाः कञ्चुकमिव लोहजाङ्गत्राणमित्यर्थः ' कंचुको वाणवारो स्त्रीः ' इत्यमरः कञ्चुकपदं नैविड्यं ध्वनयति। तच्च हर्षातिशयम् आततान विस्तारयति स्म आनन्दादितिभावः । एवं च स्वतः कठिनतरयोरपि कुचयोः सुरतसङ्गरे भंगो मा भवत्विति धिया कञ्चुककरणेन सुरतप्रियत्वमभिव्यज्यते एवं च ननान्दाया वाधिर्येपि नेत्रसत्वाद्देवरपत्न्याश्च नेत्राभावेपि श्रोत्रसत्वात् सुरतप्रतिवन्धकप्रदर्शनेन कथं संकेतकरणमिति दूषणमलम्भकं वेदितव्यम् । ऋजवस्तु नात्र सुरतप्रतिवन्धकसामीन्यभावविवक्षेत्याहुः । अत्रैतादृशोक्तिवस्तुना पान्थस्य सङ्केतदानप्रतीतिरूपं वस्तु ध्वन्यते । तेन चायमुपभोग्य इति । नायिकाहर्षप्राप्तिरूपं वस्तु व्यज्यते ॥ वसन्ततिलका वृत्तम् ॥ ३० ॥

सपरिकरां परोढामभिधाय कन्यकां लक्षयति। किञ्चिदिति । कांचित्कांचित्प्रत्याह । किंचिदिति । किंचित् मनाक् कुञ्चिता वलयिता तिर्यग्वलनादिति भावः हारयष्टिर्हारलता यत्र क्रियायाम् तथा किंचित्पदं बहुतरतिर्यग्वलने सविधजनस्वाकूतज्ञानं गमिष्यति संकेतदानगोपनं व्यञ्जयति। हारपदं चित्ताकर्षकत्वं स्वच्छान्तःकरणत्वं च ध्वनयति। यष्टिपदं कठिनतामावेदयति सा च कामुकदर्शनसमयसञ्जातविरहकातरता स्त्रीलिंगनिर्देशश्च स्वनिष्ठलज्जायास्त्वौचित्तीं द्योतयति । सा च तव तु वृथा न तद्वत्वमुचितमिति निःशङ्कत्वौचित्यम् । समस्तं च सङ्केतगमनावसरे तिर्यग्विलोकनेन जनगोपनकर्तव्यता

वित्तमात्रोपाधिकसकलपुरुषानुरागा सामान्यवनिता ॥ नचाग्निमित्रे क्षितिपतावनुरक्तायामैरावत्यामव्याप्तिः तत्र वित्तमात्रोपाधेरभावादिति चेन्मैवम् । तापिकाश्मीरहीरादिदातरि महाराजनुरक्ता नतु महर्षौ तेनावगम्यते तत्रापि

---

व्यनक्ति । किंच सरलभ्रूवल्लि सरले अकुटिले भ्रूवल्ली भ्रूलते यत्र । सरलपदेन संस्पृहावलोकनीयत्वं व्यज्यते वल्लिपदेन सरसत्वं ध्वन्यते । स्त्रीलिङ्गनिर्देशेन स्वीयस्वाभाविककौटिल्यस्यापि त्यागेन कामुकविषयकप्रेमातिशयो द्योत्यते समस्तेन च स्वीयदूरदर्शित्वम् । किंच साचिस्मितम् साचि तिर्यक् स्मितं हसितं यत्र अन्यापदेशेनेति भावः । एवं च हास्यगोपनेन ज्योत्स्नायां नागन्तव्यमिति व्यजते । किंच प्रान्तभ्रान्तविलोचनद्युतिः । प्रान्तयोरपाङ्गयोर्भ्रान्ता व्याकुला विलोचनयोर्नेत्रयोर्द्युतिः कान्तिर्यत्र भ्रान्तपदं कामुको दृङ्मार्गोन्मापसरत्विति । विरहभीरुतां गमयति । समस्तं च संकेतगमतकाले परितो विलोकनेनान्यानवलोकनीयतया गच्छेति शेषः । आगमनगोपनं व्यञ्जयति । किंच भुजापर्यस्तकर्णोत्पलम् । भुजायां बाहौ । भुजा च गुर्वीयमिति माघीयप्रयोगदर्शनात् भुजशब्दः स्त्रीलिङ्गोप्यस्ति । पर्यस्तं कर्णोत्पलम् अवतंसीकृतमिति भावः । एवं च मद्भुजायां कदा त्वत्करकमलसंगो भविष्यतीत्यालिङ्गनोत्कण्ठयं ध्वन्यते । तथा स्फुरदङ्गुलीयकरुचा । स्फुरन्ती दीप्यमाना अङ्गुलीयकस्योर्मिकायाः 'अङ्गुलीयकमूर्मिका'इत्यमरः । रुक् कान्तिर्यस्याः तया एवं च भूषणस्यापि शोभाजनकतयाङ्गुल्याः शोभातिशयो ध्वन्यते । अङ्गुल्या गण्डस्य कपोलस्य कण्डूयनं कुर्वाणा विदधती । एवं च मत्कपोले त्वया स्वकरेण पत्रवल्ली विरचनीयेति व्यञ्जयति । कर्णस्येति पाठे त्वद्वचनामृतपात्रता झटित्यस्य कर्णस्य भवत्विति ध्वनयति । नृपकन्यका राजकन्यका नृपपदं दुःप्राप्यत्वं व्यनक्ति यद्वा इतरनरसंरक्षकस्य स्वीयकन्यकारक्षणे किं काठिन्यमिति तथाविधरक्षणादिपरिहारपुरःसरावलोकनेनातिवश्यत्वम् । सुकृतिनम् सुकृतपरिपाकवन्तं युवानम् यस्त्यक्ष्यते समय इतिवत् । यमालोकयते सुकृतीति वचनव्यक्तिः सव्याजं तादृशचेष्टाभिः स्वाकूतं ख्यापयन्ती किमपि व्याजीकृत्य धार्ष्ट्याभावात् सखीसान्निध्यादिति वा आलोकते विलोकयति । मदनपरवशतयेतिभावः । तादृशचेष्टाचरणेन वस्तुना नायकस्य मय्यनुरक्तेयमिति प्रतीतिरूपवस्तुध्वनिः । शार्दूलविक्रीडितं वृत्तम् ॥ ३१ ॥

वित्तमात्रमेवोपाधिरिति महर्षौ सौन्दर्योपाध्यनुरागस्य कालिकव्याप्यवृत्तित्वेन सार्वत्रिके वित्तमेवोपाधिरिति प्रतिभाति । सामान्यवनिता यथा—

---

लब्धावसरत्वात् सामान्यवनितां लक्षयति । वित्तमात्रेति । वित्तेतरानुपाधिकत्वे सति वित्तोपाधिकसकलपुरुषविषयकानुरागवत्त्वमित्यर्थः । परकीया या अपि कदाचिद्वित्तोपाधिकानुरागवत्त्वात् तत्रातिव्याप्तिरतः सत्यन्तं । ननु तर्ह्यग्निमित्रादिनृपतिसौन्दर्यगुणोपाधिकानुरागभागैरावत्यादावव्याप्तिरित्याह न त्विति । अग्निमित्रैरावतीपदे चारुदत्तवसन्तसेनोपलक्षके । व्याप्तिमेव विवृणोति ॥ तत्रेति । वित्तमात्रोपाधेरभावात् सौन्दर्यादिगुणोपाधिसत्त्वात् उत्तरयति नैवमित्यादि । सापि ऐरावत्यपि अपिना चारुदत्तगुणलुब्धाया वसन्तसेनायाः संग्रहः महाराजेऽग्निमित्रे चारुदत्ते महर्षौ अदातरीत्यर्थः । फलितमाह तेनेत्यादि तेन अदात्रनुरागाभावविशिष्टमहाराजाग्निमित्राद्यनुरागेण हेतुनेत्यर्थः । अवगम्यते अनुमीयते । तयोरपीति वित्तमात्रमेव न सौन्दर्यादीत्यर्थः । अयं भावः । ऐरावतीवसंतसेने वित्तेतरायाधिकत्वे सति वित्तोपाधिकाग्निमित्रचारुदत्तमहाराजानुरागवत्यौ अदात्रनुरागाभावविशिष्टरत्नादिदानशीलाग्निमित्रचारुदत्तानुरागवत्त्वात् यन्नैवं तन्नैवमित्यनुमानात् तत्रापि वित्तोपाधिक एवानुरागः । अत एव दशरूपकेऽप्युक्तं ।

छन्नकामसुखार्थाज्ञस्वतंत्राहं पुरण्डकान् ।
रक्तेव रञ्जयेत्स्वार्थान् निःस्वान्मात्रा विवासयेत् ॥

इति यदीदानींतना अपि काश्चित्सामान्यवनिताः केषांचित्सौन्दर्यादिगुणलोभात् स्वीयधनैरेवोपकुर्वन्तीति प्रत्यविरुद्धेयं कल्पनेति विभाव्यते तदोक्तरीत्या सामान्यवनितात्वस्योपाधेः कालिकाव्याप्यवृत्तित्वमेव प्रथमतः सामान्यवनितानां विना धनानुरागश्चिरपरिचयोत्तरं । सौन्दर्यादिनानुराग इति तदवस्थायां नास्त्येव सामान्यवनितात्वम् । ननु तदा तासां क्वान्तभाव इति चेत् परकीयायामिति गृहाण । न चाप्रकटपरपुरुषाभिलाषेति लक्षणव्याघातापत्तिः । परकीयाया अपि न सर्वान् प्रत्यप्रकटपरपुरुषाभिलाषो यथा तथात्रापीति दिक् । केचित्तु । सकलपदं वाहुल्याभिप्रायं वाहुल्येन वित्तमात्रोपाधिकानुरागवत्त्वमिति लक्षणमाहुस्तन्न अननुगमात् ।

सामान्यवनितामुदाहरति । दृष्टेति । काचित्काश्चित्प्रत्याह । प्राङ्गणसन्निधौ प्रकृष्टमङ्गणं

दृष्ट्वा प्राङ्गणसन्निधौ बहुधनं दातारमभ्यागतं
वक्षोजौ तनुतः परस्परमिवाश्लेषं कुरङ्गीदृशः ॥
आनन्दाश्रुपयांसि मुञ्चति मुहुर्मालामिषात्कुन्तलो
दृष्टिः किञ्च धनागमं कथयितुं कर्णान्तिकं गच्छति ॥ ३२ ॥

---

प्राङ्गणम्। प्रकर्षश्च सुभगजनसरणिसन्निहितत्वं दूरतोपि दृश्यकामुकत्वं वा तत्सन्निधौ चत्वरनिकटे। 'अङ्गणं चत्वराजिर' इत्यमरः। सन्निधिपदं दूरत एव दर्शनेनैतादृशावस्थोत्पत्त्या धनलुब्धत्वमावेदयति। बहुधनं बहुद्रव्यवन्तं दातृत्वाभावे बहुधनवत्त्वमप्रयोजकमित्यत आह दातारं दानशीलमित्यर्थः। अभ्यागतं अनाकारितमिति भावः। स्वतः प्रवृत्तत्वेनाधिकधनदातृत्वं द्योत्यते तेन च हर्षातिशयः। दृष्ट्वा विलोक्य न तु स्पृष्ट्वा एवमपि दर्शनमात्रादेव एतादृश्यवस्थेति धनलुब्धत्वं द्योत्यते। कुरङ्गीदृशः मृगनेत्रायाः 'मृगे कुरङ्गवातायु' इत्यमरः। कुरङ्गपदं विशालत्वचपलत्वे द्योतयति। वक्षोजौ कुचौ वक्षोजपदमन्तरङ्गतां गमयति। सा च स्वनायिकासुखसाधनसमहर्षयोग्यताम् परस्परमन्योन्यम् परस्परपदं समानहर्षतामावेदयति। आश्लेषमालिङ्गनमिव हारादिप्राप्तिसम्भावनयेति भावः। आश्लेषपदं हर्षविशेषं व्यञ्जयति। तनुतः विस्तारयत इव। तनुत इत्यनेनाश्लेषे चिरकालावस्थायित्वं ध्वन्यते। तेन च हर्षातिशयः। कुन्तलाः कचाः सन्त्यस्मिन् संयतत्वेन सः कुन्तल इति अर्शआदिभ्योच्। 'चिकुरः कुन्तलो वालः' इत्यमरः। मालामिषात् पुष्पस्रग्व्याजात् मालापदं कामितां द्योतयति। आनन्दाश्रुपयांसि आनन्दो हर्षः शिरोभूषालिप्सयेति भावः। तेनाश्रुपयांसि अश्रुबिन्दूनि च पयःपदं कामिहृदयमदनानलोपशमनशीलतामावेदयति। मुञ्चति विसृजति। किञ्च अन्यच्च दृष्टिः दृष्टिपदं धनदातृत्वादातृत्वविवेकित्वं ध्वनयति एकवचनं चैकरूपतया सत्यकथकत्वं। धनागमं धनप्राप्तिः। धनपदेन नानाविधत्वं ध्वन्यते। कथयितुं ख्यापयितुम्। अमुना स्वतःप्रवृत्तत्वं व्यज्यते। तेन चान्तरङ्गत्वं समीचीनत्वम् च। कर्णान्तिकमिति पाठेपि तदेव व्यङ्ग्यम्। गच्छतीव अत्र तद्दर्शनानन्देन गात्रस्फुरणे सहसैव स्तनसम्पर्के आश्लेषोत्प्रेक्षा स्वाभिलाषप्रकटनाय शिरसि चैलाञ्चलदाने करादिसम्पर्केणाङ्गयष्टिकम्। कर्णान्तिकम् श्रोत्रनिकटम्। श्रोत्रपदेन रहस्यकथनयोग्यता ध्वन्यते। शार्दूलविक्रीडितं वृत्तम् ॥ ३२ ॥

इति श्रीरसमञ्जर्यां स्वीयापरकीयासामान्यानिरूपणम् ॥ १ ॥

एता अन्यसंभोगदुःखिता वक्रोक्तिगर्विता मानवत्यश्च तिस्रो भवन्ति। तत्रान्यसम्भोगदुःखिता यथा—

त्वं दूति निरगाः कुञ्जं न तु पापीयसो गृहम् ॥
किंशुकाभरणं देहे दृश्यते कथमन्यथा ॥ ३२ ॥

---

एवं तिस्रो नायिका निरूप्य तासामेव भेदान्तरमाह ॥ एता इत्यादि ॥ मुग्धाभेदहीना स्वीया परकीया सामान्या इत्यर्थः अन्यसम्भोगदुःखिता अन्यस्याः परस्याः सम्भोगः स्वनायकेन सह रतिप्रसङ्गस्तेन दुःखिता इत्यर्थः स्वनायकीयनायिकान्तरसम्भोगज्ञानजन्यदुःखवत्त्वमिति तल्लक्षणं फलितम्। वक्रोक्तिगर्वितेति वक्रोक्त्योक्तिविशेषेण गर्विता स्वगर्वप्रदर्शनकारिणी उक्तिविशेषप्रकटितस्वगर्ववत्वमिति फलितम्। मानलक्षणं चाग्रे वक्ष्यते। प्रथमोद्दिष्टत्वादन्यसम्भोगदुःखितामुदाहरति। त्वमितीति। काचिन्नायिका स्वयमेव नायकाकारणाय प्रेषितां तेनोपभुक्तां दूतीं प्रति वदति हे दूति दूतिपदमसत्यभाषित्वमावेदयति अन्यधववेदनानभिज्ञत्वं स्वकार्ये करणप्रवणत्वं वात्वं कुञ्जं लतापिहितप्रदेशं अनादिष्टमिति भावः। कुञ्जपदं विविधोद्दीपनविभाववत्तया मदनबाधाजनकतां व्यञ्जयति। निरगाः गतवती निरगा इत्यनेन गमने बुद्धिपूर्वकता व्यज्यते। 'गातिस्था' इति सिचो लुक्। परं पापीयसो निर्दयस्य पापीयसःपदं हतसङ्गतियोग्यतामावेदयति। एकवचनमनादरं व्यञ्जयति। गृहं सदनम् आदिष्टमितिभावः। गृहपदं गमनयोग्यतां ध्वनयति। द्वितीया स्पृहणीयतां व्यनक्ति। न निरगाः प्रमाणसिद्धाप्रतिपादकं मद्वाक्यं नालीकमित्याह। अन्यथेति उक्तवैपरीत्ये तवेति शेषः। तवेतिपदानुपादानेन स्वतन्त्रता ध्वन्यते। तथा च। स्वतंत्रस्य किमकार्यमिति द्योत्यते तेन च स्वनायकसङ्गमशालित्वम्। देहे अङ्गे देहपदं सन्तोषपात्रतां व्यञ्जयति। किंशुकाभरणम् किंशुकानां पलाशपुष्पाणामाभरणम् मालेतियावत्। यद्वा तान्येवाभरणमलङ्कारः इतरालङ्करणसत्त्वे तत्त्वतो न वेद्मि कारणं किंशुकाभरणे तु किन्तु स्फुटं प्रत्येमीत्यर्थः। एवं च स्फुटपरिदृश्यमानकिंशुकाभरणवत्तया कुञ्जगमनानुमानात् मया त्वदीयकुञ्जगमनं तत्त्वतोऽवसितमतो नाहं प्रतारणीयेति भावः। किंशुकपदेनारक्तत्वं कुटिलत्वं च व्यज्यते आभरणपदं सुखजनकतां व्यनक्ति एकवचनं दुर्लभतां ध्वनयति। कथं दृश्यते। पथ्यावक्त्रं वृत्तम् ॥ ३२ ॥

वक्रोक्तिगर्विता द्विविधा प्रेमगर्विता सौन्दर्यगर्विता च ॥ तत्र प्रेमगर्विता यथा—

वपुषि तव तनोति रत्नभूष।
प्रभुरिति धन्यतमासि किं ब्रवीमि ॥
सखि तनुनयनान्तरालभीरुः
कलयति मे न विभूषणानि कान्तः ॥ ३४ ॥

सौन्दर्यगर्विता यथा—

कलयति कमलोपमानमक्ष्णोः
प्रथयति वाचि सुधारसस्य साम्यम् ॥

---

उद्दिष्टक्रमाद्वक्रोक्तिगर्विताविभागमाह । प्रेमेत्यादि । प्रियतमनिरूपितस्वगतप्रीत्यतिशयगर्व-व्यञ्जकं वक्रोक्तिरचनानिपुणत्वं प्रेमगर्विताात्वम् । तथा स्वगतसौन्दर्योत्कर्षगर्वप्रयुक्तवक्रोक्ति-रचनानिपुणत्वं सौन्दर्यगर्विताात्वं । तत्र प्रथमतोद्दिष्टत्वात् प्रथमामुदाहरति । वपुषीति काचित भङ्ग्यन्तरेण स्वगतप्रियतमप्रीत्यतिशयमाविष्कर्तुं सखीं प्रत्याह हे सखि प्रभुर्भर्ता प्रभुपदं समर्थकतां व्यञ्जयति सा च यथा बहुलतयालंकरणादिकं गेहे स्थापनीयं तथा तव देहे स्थापित-मतो न तोषातिशय इति प्रियतमानादरं ध्वनयति तव वपुषि अङ्गे रत्नभूषां रत्नयुक्तालंकारं तनोति विस्तारयति । यद्धि स्वतो न शोभते तस्यैव भूषाकरणं युक्तमयुक्तमन्यस्येति भावः । इति हेतोस्त्वं धन्यतमासि अन्यास्त्वधन्याः भूषादिविरहात् त्वं त्वतिशयितधन्या इति किं ब्रवीमीति सोल्लुण्ठवचनम् । यद्वा धन्यतमासीति किं कुत्सितं ब्रवीमि तस्मादधन्यतमासीत्यर्थः अतएव तदेवाह सखि तनुनयनांतरालभीरुः तनुरङ्गं ममेति भावः । नयनं नेत्रं तदीयमिति भावः । तयोरन्तरालं व्यवधायकं ततो भीरुर्भयशीलः भूषणमपि तद्विलोकनान्तरायं मन्वान इत्यर्थः । यद्वा तनु स्वल्पमपि नयनान्तरालं दर्शनव्यवधायकं यत्किंचित्तत्र भीरुस्तदसहमान इत्यर्थः । तनुपदं कमनीयतां ध्वनयति । नयनपदं दर्शनलालसतां व्यञ्जयति । भीरुपदमत्य-न्तासक्तिं व्यनक्ति । कान्तः प्रियः कान्तपदेन कमनीयता व्यज्यते मे वपुषि विभूषणानि अलं-करणानि । बहुवचनं नालंकरणसमर्थतां कान्तस्याभिद्योतयति । पुष्पिताग्रा वृत्तम् ॥ ३४ ॥

सखि कथय किमाचरामि कान्ते
मम जनि तत्र सहिष्णुतैव दोषः ॥ ३५ ॥

मानवती यथा—

प्रियापराधसूचिका चेष्टा मानः स च लघुर्मध्यमो गुरुश्च। अल्पापनेयो लघुः कष्टतरापनेयो मध्यमः कष्टतमापनेयो गुरुः। असाध्यस्तु रसाभासो-परस्त्रीदर्शनादिजन्मा लघुः, गोत्रस्खलनादिजन्मा मध्यमः अपरस्त्रीसङ्गजन्मा

---

द्वितीयामुदाहरति। कलयतीति। काचित्सखीं वक्ति हे सखि कान्तप्रेयसि कान्तपदं तिरस्कारायोग्यतां व्यनक्ति अक्ष्णोर्नेत्रयोः ममेति भावः। कमलोपमानं साम्यं कमलपदं सरसतां दीर्घतां च ध्वनयति। कलयति विचारयति एवंचैतादृशविचारमात्रकारिणि एतादृशकोपकरणम्। किं पुनस्तथावचनादाविति व्यज्यते वदतिसतीत्यर्थः। कमलस्य निरुपमानयोर्मन्नयनयोरुपमानत्वेन परापेक्षया कमलस्य प्रसिद्धत्वं गुणोत्कर्षशालित्वं चागतमिति कथमयुक्तमनेन विभाव्यत इति। क्लेशदातृत्वं व्यज्यते तेन च सापराधत्वं तेनच दंडार्हत्वं तथा वाचि सुधारसस्यामृतद्रवस्य रसपदं मधुरिमातिशयं व्यञ्जयति साम्यं तुल्यत्वम् प्रथयति प्रख्यापयति सतीत्यर्थः। अत्रापि पूर्ववदेव व्यंग्यम् के ते वरा के मन्नयनयोरुपमानं लक्ष्येते विपरीतत्वं तूक्तमिति भावः। उक्तं च

गुणोत्कृष्टं प्रसिद्धं यदुपमानं तदुच्यते।
न न्यूनमुपमेयं स्यादेतयोस्तुल्यतोपमा॥

इति एवमपकर्षादरकारिणि किमाचरामि किं प्रतिसंधेयं विचारयामि तत्कथयोपदिश आस्तां वा तावदेषा विचारणा तत्र तस्मिन् अनुचितविचारकारिण्यपि कान्ते सहिष्णुतैव तदीयतादृशविचारसहनशीलत्वमेव दोषः सर्वत्र गुणरूपाया अप्येतस्याः अत्र दोषत्वमिति चित्रं दोषत्वमिव पदं भ्रान्तिजनतां गमयति समजनि संजातः उपसर्गेण विशेषदर्शनानिवर्त्यत्वं व्यज्यते। पुष्पिताग्रावृत्तम् ॥ ३५ ॥

मानवतीं लक्षयितुमाह ॥ मानवतीत्यादि। प्रियापराधज्ञापकचेष्टाकोपवत्त्वं तद्वत्वमेव वा लक्षणम् तस्य त्रैविध्यमित्याह सचेति। क्रमेण तल्लक्षणान्याह अल्पापनेय इत्यादि। कष्टतर इति द्व्यर्थे 'द्विवचनविभज्य' इति तरप्। कष्टतम इति बहुत्वे 'अतिशायने' तमबिष्ठनौ इति तमप्। उक्तं च—

गुरुः। अन्यथासिद्धकुतूहलाद्यपनेयो लघुः अन्यथावादशपथाद्यपनेयो मध्यमः चरणपातभूषणदानाद्यपनेयो गुरुः। अपरस्त्रीदर्शनादिजन्मा यथा—

स्वेदाम्बुभिः क्वचन पिच्छिलमङ्गभूमौ
शातोदरि क्वचन कण्टकितं चकास्ति ॥
अन्यां विलोकयति भाषयति प्रियेपि
मानः क्व दास्यति पदं तव तत्र विघ्नः ॥ ३६ ॥

---

स प्रायशो भवेत्त्रेधा कामिनीनां प्रियं प्रति।
अवेक्ष्य दोषमेतस्य गरीयान् मध्यमो लघुः ॥

इति नन्वसाध्योप्येकस्तिष्ठति स नोक्त इत्यतो न्यूनत्वमित्यत आह असाध्य इति सोऽलीक एवेति भावः। तत्कारणान्याह। अपरस्त्रीत्यादि। गोत्रस्खलनमिति। सपत्नीनामोच्चारणमित्यर्थः। तस्यापनोदकान्याह। अन्यथासिद्धेति। प्रकारान्तरसिद्धं यत्कुलं तेनापनोद्य इत्यर्थः। अन्यथात्वादिति। अपलापोक्तिरित्यर्थः। तत्राद्यवतीमुदाहरति। स्वेदाम्बुभिरिति काचित्प्रियतमसखी नायकाम्प्रति वक्ति हे शातोदरि। शातोदरीति सम्बुद्धिपदोपादानमुदरमध्येपि मानस्यावस्थानस्थलं नास्तीति व्यञ्जयति। प्रिये प्राणेश्वरे प्रियपदं तत्कृतापराधगणनाकरणौचित्यं ध्वनयति। अन्यां पराम्। अन्यपदमगणनीयं व्यनक्ति। विलोकयति विभूषयत्यपि विलोकनकारिण्यपि न केवलं विलोकनकारित्वमात्रम्। अपि तु। अलंकरणकारित्वमपि महदपराधे कारणं तद्वत्त्वेपीत्यपिशब्दार्थः। सतीति शेषः। एतद्दृश्यमानम्। एततपदंपिच्छिलत्वाद्यपलापकारणाऽनौचित्यं ध्वनयति। अङ्गं शरीरम्। अङ्गपदं स्वल्पत्वं द्योतयति एकवचनं च तदतिशयम्। क्वचन क्वापि प्रदेश इत्यर्थः। किमः सप्तम्यन्तात्किमोति 'क्वाति' इति क्वादेशः। सप्तम्यर्थेव्ययमेतत्। स्वेदाम्बुभिः स्वेदोदविन्दुभिः। बहुवचनं पिच्छिलतातिशयं गमयति पिच्छिलं पङ्किलम्। पिच्छिलान्यस्य सन्तीत्यर्थे। 'लोमादि' सूत्रेण लच्। पिच्छिलपदेन पदावस्थानानर्हत्वं ध्वन्यते। तथा क्वचन क्वापि प्रदेशे कण्टकितं सञ्जातकण्टकं प्रियपदश्रवणमात्रसञ्जातप्रमोदोदयेनेत्युभयत्र भावः। 'तदस्य सञ्जातम्' इत्यादिनेतच्। कण्टकितपदेन पददानानर्हत्वं व्यज्यते। चकास्ति शोभते। रम्याणां विकृतिरपि श्रियं तनोतीति भावः। विवक्षितं वक्ति तव मानोऽभिमानः क्व कस्मिन्प्रदेशे पदमंघ्रिं दास्यति तत्र तत् स्थलं न विघ्नः न

गोत्रस्खलनादि यथा—

यद्गोत्रस्खलनं तत्र भ्रमो यदि न मन्यते ॥
रोमालिव्यालसंस्पर्शं शपथं तन्वि कारय ॥ ३७ ॥

अपराङ्गनासङ्गमजन्मा यथा—

---

जानीमः सापराधेपि प्रियेनुरागेण स्वेदादिभिर्व्याप्ते तवाङ्गे मानस्य पदमपि दातुं न पश्यामि स्थलमित्यर्थः। एकत्रपिच्छिलत्वादपरत्र कण्टकितत्वादिति भावः। अत्रान्यथासिद्धकुतूहलाद्यपनेयत्वं स्फुटम्। वसन्ततिलकावृत्तम् ॥ ३६ ॥

उद्देशक्रमाद्गोत्रस्खलनजन्यमानवतीमुदाहरति। यद्गोत्रमिति। स्वकृतगोत्रस्खलनकुपितां प्रियतमां सान्त्वयितुं वक्ति कान्ते इति। सम्बुद्धिरध्याहर्तव्या तदनुपादानं च स्वकृतापराधतया सम्भ्रमातिशयमावेदयति। यद्गोत्रस्खलनं सपत्नीनामोच्चारणं मयाकृतमिति भावः। 'गोत्रे नाम्नि कुले गोत्र'मित्यमरः। तत्र तस्मिन्विषये भ्रमो यदि न मन्यते यन्मया नामोच्चारणं कृतं तत्त्वदीयभ्रान्त्या स तु त्वत्सपत्न्या इति भ्रमेणेत्यर्थः। इदं च मद्वचनमसत्यं मन्यसे चेत्तर्हि रोमालिव्यालसंस्पर्शं रोमालिः रोमश्रेणिः स एव व्यालः सर्पः तस्य संस्पर्शरूपं शपथं दिव्यरूपं तव विप्रतिपन्नेर्थे कारय। रोमालि पदं श्यामत्वं व्यञ्जयति तच्च विषातिशयवत्त्वम् तदपि दुःस्पर्शनीयत्वम् व्यालपदं साहजिकक्रूरत्वं ध्वनयति समित्युपसर्गो मणिमन्त्रादिकपटविरहं गमयति शपथपदं सर्वपरिहारमौलिभूतत्वं गमयति। कारयेति पदमतिशायने स्वत एव तन्निवारणकरणौचित्येपि पराधीनतामावेदयति। सा च मत्कृतनाम्नोच्चारणस्य न सपत्नीविषयत्वं मन्तव्यमिति रोमालिव्यालिसंस्पर्शमिति पाठमाश्रित्य रोमालिरूपा या व्याली व्यालस्त्री 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्वता। तस्याः स्पर्शं एवं च स्त्रीत्वेन त्वत्सजातीयतया त्वत्पक्षकारित्वेपि स्पर्शोन्मुखत्वेनातिशुद्धत्वं व्यज्यत इति कश्चित्। अत्र शपथाद्यपनेयत्वं स्फुटमेव। पथ्यावक्त्रं वृत्तम् ॥ ३७ ॥

अपराङ्गनासङ्गजन्यमानवतीमुदाहरति। दयितस्येति। दयितस्य कान्तस्य दयितपदं तत्कृतापराधस्य दुःखातिशयजनकत्वं व्यञ्जयति ॥ भालदेशं ललाटपट्टम्। भालपदमुत्तमत्वमावेदयति। देशपदं विशालतां द्योतयति। सा चात्यन्तपदसंघट्टनम्। तच्चातिप्रेमाणम्। सपत्न्याः सपत्नीपदं स्वाभाविकेर्ष्यावत्त्वं द्योतयति। चरणालक्तकपिञ्जरम्। पदसम्बन्धिलाक्षारसवभ्रुवर्णम्। उक्तानुकरणेन चरणसंपर्कादितिभावः। निरीक्ष्य

दयितस्य निरीक्ष्य भालदेशं चरणालक्तकपिञ्जरं सपत्न्याः ॥

सुदृशो नयनस्य कोणभासः श्रुतिमुक्ताः शिखरोपमा बभूवुः ॥ ३८ ॥

एताः षोडशाप्यष्टाभिरवस्थाभिः प्रत्येकमष्टविधाः प्रोषितभर्तृका खण्डिता कलहान्तरिता विप्रलब्धा उत्का वासकसज्जा स्वाधीनपतिका अभिसारिका चेति। गणनादष्टाविंशत्याधिकं शतं भेदा भवन्ति। तासामप्युत्तमाधममध्यमभेदगणनया चतुरधिकाशीतियुतं शतत्रयं भेदा भवंति। यत्त्वेतासां

सम्यगवलोक्य सुदृशो नायिकायाः श्रुतिमुक्ताः कर्णोपान्तप्रेरिताः कोपेन वक्रविलोकनादितिभावः। नयनस्य नेत्रस्य प्रियंप्रतिप्रेरितस्येतिभावः। कोणभासः प्रान्तदीप्तयः कटाक्षदीप्तय इति यावत् तिर्यग्विलोकनम् एकस्यैव प्राधान्येन प्रेक्षणसंबन्धान्नयनस्येत्येकत्वम्। शिखरोपमाः। शिखरेण पद्मरागेण। 'शिखरः पद्मरागः स्यात्' इति विश्वः। वैजयन्ती 'तन्वीश्यामाशिखरदशना' इति मेघदूतप्रयोगः शिखरं दाडिमीवीजमित्यपिकश्चित्। उपमीयन्ते आरक्तत्वादितिभावः॥ तथा बभूवुः संपन्नाः कोपेनेतिभावः। कोणभासा इति पाठे आरक्तकटाक्षदीप्त्या। श्रुतिमुक्ताः श्रवणभूषणयोग्यमुक्ताफलानि अर्थान्नायकेन स्वापराधक्षमापनायानीतानि पद्मरागतुल्यानीत्यर्थः। एवं च भूषणदानाद्यपनोद्यत्वं द्योत्यते। यद्वा श्रुतिमुक्ताः अर्थात्पदावनतनायककर्णाभरणरूपाः। कुपितकामिनीनयनदीप्त्या रक्ताः जाता इत्यर्थः। एवं चरणपाताद्यपनोद्यत्वं ध्वन्यते। ये तु शिखरेण गिरिशृङ्गेणोपमीयन्ते श्यामत्वादित्याहुस्तत्कुपितकामिनीनयनदीप्तेः श्यामत्वं वर्णनाऽनौचित्येनाऽनुचितमाभाति अत्र तादृशख्यापनरूपवस्तुना नायिकायाः सागसि प्रेयसि कोपाभिव्यक्तिरूपं वस्तु व्यज्यते॥ मालभारणीयो वृत्तम्॥ ३८॥

प्रसंगादेतासां भेदान्तराणि निरूपयितुमाह एता इति। षोडशेति मध्याप्रगल्भयोः प्रत्येकधीरादिभेदानां ज्येष्ठाकनिष्ठात्वेन द्वैविध्ये द्वादश मुग्धा एकैवेति मिलितं त्रयोदशभेदवती स्वीया द्विविधा पराङ्गना सामान्यवनितात्वेकविधेति षोडशेत्यर्थः। अवस्थाभेदमेवाह प्रोषितेत्यादि। तासामिति पूर्वगणितानामित्यर्थः। चतुरधिकाशीतियुतमिति परिगणनमेतत् नाधिक्यव्यवच्छेदकं।

१ मल्लिनाथमतेन 'शिखरिदशना' इतिपाठः साधुः व्याख्यातं च शिखरिणः कोटिमन्तः' इति दन्ताः शिखरिणो यस्य इति सामुद्रिके॥

दिव्यादिव्योभयभेदगणनया द्विपञ्चाशदधिकशतयुतं सहस्रं भेदा भवन्ति। दिव्या इन्द्राण्यादयः अदिव्या मालत्यादयः दिव्यादिव्याः सीतादय इति। तत्र अवस्थाभेदेनैव नायिकानां भेदात् जातिभेदेन भेदस्वीकारे नायकानामप्येवमानन्त्यं स्यात् तथा भेदा नायकानामपि सन्ति। इन्द्रादयो दिव्याः। अदिव्या माधवादयः। दिव्यादिव्या अर्जुनादय इति। यद्यपि मुग्धाया यथा धीरादिभेदाभावस्तथाविधप्रज्ञासामग्र्यभावात् तथात्राप्यष्टविधत्वाभावो भवितुमर्हति तथापि प्राचीनलेखनानुरोधेन नवोढामालम्ब्यैते भेदा अवगन्तव्याः। देशान्तरगते प्रेयसि संतापव्याकुलाप्रोषितभर्तृका। उत्काकलहान्तरिताविप्रलब्धानां पतिर्देशान्तरगतो न भवतीति न तत्रातिव्याप्तिः। अस्याश्चेष्टा। दशावस्था सा त्वग्रे वक्ष्यते।

---

जातिकालवयोवस्थाभावकन्दर्पसायकैः।
इतरा अप्यसंख्याता नोक्ता विस्तरभीतितः॥

इति प्राचोक्तेरन्येपि भेदाध्यवसेयाः। कस्यचिन्मतं दूषयितुमनुवदति यस्त्विति एतासामनन्तरपरिसंख्यातानां दिव्यात्वं तद्देशोपेयत्वमुपाधिरूपं सामान्यं हेतुमाह अवस्थाभेदेनैवेति कालिकविशेषेणैवेत्यर्थः। 'विशेषः कालिकोवस्था' इत्यमरः। एवकारो जात्यादिभेदकव्युदासः हेत्वसिद्धिपरिहारायाह। जातिभेदेनेति जातिरित्युपलक्षकं देशादीनां तत्रैवोपष्टम्भकान्तरमाह तथेति अन्यदपीत्यर्थः। अयंभावः। जात्यादिभेदेन भेदे नायिकानन्त्यं स्यात्तथा नायकेष्वपि दिव्यादिभेदसंभवादानन्त्यं स्यात् एवं दिव्यादिभेदवत् खण्डितत्वादिकमपि नायकानां स्यात् युक्तेस्तुल्यत्वात् तस्माद्यथा प्राचीनैरनुदाहृतत्वान्नैते भेदा नायकानाम्। तथा नायकानां जात्यादिभेदनिबन्धनभेदवत्वम्। वस्तुतस्तु वात्स्यायनादिभिर्जात्यादिनापि भेदस्वीकारात् तद्भेदाद्भेदो युक्त एव तासामानन्त्यं च व्यक्त्यानन्त्यवददोषाय यच्च नायिकानामपि खण्डितत्वादिकं स्यादित्युक्तम् तच्चानौचित्याद्रसभङ्गापत्त्या पराहतं प्राचामनुपन्यासात्तु न दिव्यादिभेदाभावसाधकम् अप्रयोजकत्वात् अतएव जातिकालेत्यादि प्रागल्भ्यधायि ननु मुग्धायाः

मुग्धा प्रोषितभर्तृका यथा—

दुःखं दीर्घतरं वहत्यपि सखीवर्गाय नो भाषते
शैवालैः शयनं सृजत्यपि पुनः शेते न वा लज्जया ॥
कण्ठे गद्गद्वाचमञ्चति दृशा धत्ते न बाष्पोदकं
संतापं सहते यदम्बुजमुखी तद्वेद चेतोभवः ॥ ३९ ॥

---

प्रज्ञाविशेषाभावात् यथा धीरादिभेदाभावस्तथाष्टविधत्वाभावोपीत्याह । यद्यपीति । उत्तरयति तथापीति । प्राचीनलिखनानुरोधेनेति वस्तुतो निर्युक्तिकत्वाद्युक्तमिति भावः । तत्र प्रथमोद्दिष्टत्वात् प्रोषितभर्तृकां लक्षयति देशान्तरगतः प्रियविरहसंतापवत्त्वामित्यर्थः । दशावस्था इति तास्तु अग्रे वक्ष्यति ॥

तत्र मुग्धां प्रोषितभर्तृकामुदाहरति । दुःखमिति । काञ्चित्काञ्चित्प्रत्याह अम्बुजमुखी कमलमुखी अम्बुजपदमम्लानतां व्यञ्जयति दीर्घपदमपि प्रियतमगमनदिनमारभ्य तत्क्षणात् दीर्घतरपदमनुल्लङ्घनीयत्वं ध्वनयति । तच्च दुःसहत्वं दुःखं विरहजमित्यर्थः वहत्यपि वहतीति पदं कठिनहृदयतामशक्यप्रतीकारतां व्यनक्ति परंतु सखीवर्गाय सखीसमूहाय सखीपदं दुःखकथनार्हतां द्योतयति । वर्गपदं दुःखनिवारणात्समर्थतां गमयति । नो भाषते नो वक्ति एवं च स्वसर्वरहस्यकथनार्हस्य स्वसखीनिवहस्यापि न निवेदयति दुःखं पुनः किमन्यस्येति लज्जाविशेषत्वं ध्वन्यते । तेन मुग्धात्वम् । किंच शैवालैर्जलनील्यादिभिः शैवालपदं तापापनोदकतां व्यनक्ति शयनमास्तरणम् शयनपदं निविडतां गमयति सृजत्यपि सृजतीत्यनेन तत्करणे आदरातिशयो व्यज्यते । पुनः किंतु न शेते न निद्राति किंच कण्ठे कण्ठपदेन दुःखवशाद्रसनाजाड्यमभिव्यज्यते तेन च तत्करणे आदरातिशयोऽवगम्यते । गद्गदवाचम् अञ्चति दधाति वाच्यस्फुटत्वमभिव्यज्यते परंतु दृशा दृष्ट्या एकवचनेन विविधविलोकनाभावेन चिन्तातिशयो व्यज्यते बाष्पोदकम् अश्रुजलं उदकपदेन स्थगनानर्हत्वं व्यज्यते । न धत्ते न दधाति एवं च स्थगनानर्हस्यापि स्थगनेति लज्जालुत्वं द्योत्यते एवं विरहज्ञापकबाह्यचेष्टागोपनकारिणी यत् येन प्रकारेण संतापं विरहदाहं सहते तं प्रकारं चेतोभवो मदनः वेद जानाति नत्वन्य इति भावः सहत इति पदेन दुःसहत्वं गम्यते चेतोभवपदेन हृदयसंनिहितत्वं तेन च सहनप्रकारज्ञानवत्त्वमावेद्यते । शार्दूलविक्रीडितं वृत्तम् ॥ ३९ ॥

मध्या प्रोषितभर्तृका यथा—

वासस्तदेव वपुषो वलयं तदेव
हस्तस्य सैव जघनस्य च रत्नकाञ्ची ॥
वाचालभृङ्गसुभगे सुरभौ समस्त-
मद्याधिकं भवति ते सखि किं निपानम् ॥ ४० ॥

---

मध्यां प्रोषितभर्तृकामुदाहरति। वास इति। काचित्सखी नायिकां वक्ति हे सखि वपुषो देहस्य वासो वसनम् तदेव पूर्वगृहीतमेव वासःपदमल्पभारत्वमावेदयति एवं च सार्वकालिकदेहसंबन्धिवसनसंगात् खेदवत्ता असंभाविनीति ध्वन्यते एवमग्रेपि तथा हस्तस्य करस्य वलयं कंकणम् तदेव वलयपदं खेदाजनकत्वं व्यनक्ति तथा जघनस्य नितम्बस्य सैव पूर्वपरिगृहीतैव रत्नकाञ्चीमणिगणराजिरञ्जिता रसना यान्येव पूर्वं परिगृहीतवती वसनादीनि तान्येवैतानि संप्रति ददातीत्यर्थः। वाचालभृङ्गसुभगे वाचालाः कुत्सितबहुभाषिणः 'आलजाटचौ बहुभाषिणि' इति कुत्सार्थे आलच्। कुत्सितत्वं विरोधिविषयकत्वेनासह्यत्वेन वा ये भृङ्गा भ्रमरास्तैः सुभगेऽतिकीर्तौ वाचालपदं निन्द्यत्वमावेदयति। तच्च तद्वचनस्याश्रयणीयत्वम्। भृङ्गपदं मदनोद्दीपकत्वं व्यनक्ति सुभगपदं सामर्थ्यविशेषमभिव्यञ्जयति। तच्चानिवार्यत्वं व्यनक्ति सुरभौ पुष्पसमये। 'वसन्ते पुष्पसमये सुरभिः' इत्यमरः। सुरभिपदमुन्मादकत्वं द्योतयति। अथेदानीमेवं समस्तं वसनादिकं ते तवाधिकम् असह्यं भवति तत्र किं निदानं कारणं तत्कथय इत्यर्थः। एवं चैतादृशोत्सवसमये सुखवत्तया भवितव्यं तदभावे प्रत्युत दुःखवत्त्वे किं बीजं तन्न विद्म इति भावः। तव न मम तेनास्मदादिवैलक्षण्यमवश्यं सहेतुकमेवेति व्यज्यते समस्तपदेनैकमपि न सुखजनकमिति व्यञ्जयते। तेन तत्कारणगवेषणावश्यकत्वम् अधिकपदं दुष्परिहरणीयत्वं व्यञ्जयति। तच्च लज्जावत्त्वम्। किं निदानमिति च स्वतो कथनात्प्रश्नकरणेन तद्वत्त्वमेव बोधयति। निखिलेन च वसन्तसमयात्पूर्वं लज्जावशाद्विरहगोपनाय वसनादिधारणं कृतवती प्राप्ते तु विषमशरोद्दीपनकारिणि विविधकुसुमसमूहसौरभ्यलुब्धमधुकरसंचारिणि विरहिजनधैर्यवैधुर्यकारिणि चित्तहारिणि वसन्ते मदनमहीपतिबाधानिवारणाशक्यतया चिरपरिचितमपि वसनादिविषमं विषमिवासहमाना संजातेति लज्जा मदनसाम्यमभिव्यज्यते। वसन्ततिलकावृत्तम् ॥ ४० ॥

प्रौढा प्रोषितभर्तृका यथा—

माला बालाम्बुजदलमयी मौक्तिकी हारयष्टिः
काञ्ची या ते प्रभवति हरौ सुभ्रुवः प्रस्थितैव ॥
अन्यद्ब्रूमः किमिह धमनी वर्तते वा नवेति
ज्ञातुं बाहोरहह वलयं पाणिमूलं प्रयाति ॥ ४१ ॥

---

प्रौढां प्रोषितभर्तृकामुदाहरति मालेति। काचिन्नायिका वृत्तं कांचित्प्रत्याह सुभ्रुवो नायिकायाः बालाम्बुजदलमयी बालानि नवोदितानि यान्यम्बुजानि कमलानि तेषां दलानि पत्राणि प्राचुर्येण यस्यां 'तत्प्रकृतवचन' इति मय माला दाम मालापदं प्रकृतिभीरुत्वं तच्च स्वाश्रयसुतनुतापदर्शनसमयमेव प्रस्थानार्हतां व्यञ्जयति। तथा बालपदं कोमलत्वं तच्च सुतनुतनुतापशोषार्हत्वं ध्वनयति अम्बुजपदं जलजन्यतया नरप्रश्वासप्रोत्सारणार्हतां गमयति किंच मौक्तिकी मुक्तासंबन्धिनी हारयष्टिर्हारलतामौक्तिकीयोपशमनसामर्थ्येपि तद्भीतितः प्रस्थानकरणे सुतनुसंतापातिशयं व्यनक्ति। दलपदं सूक्ष्मतां सा चेषत्सुतनुं संतापश्वासप्रोत्सारणार्हतां गमयति मौक्तिकीतिपदेन शीतलस्वभाववत्त्वं तद्वत्त्वेऽप्यसह्यमानत्वेन विरहातिशयो व्यज्यते हारपदेन बहुधाङ्गसंगशालित्वं तत्त्वेपि त्यागेन तस्मिन् स एव द्योत्यते किंच काञ्चिरशनामालेत्यादि स्त्रीलिंगनिर्देशेन नायिकासजातीयत्वेन त्यागानौचित्येपि तत्करणेन विरहातिशयो व्यज्यते। यद्वा भीरुत्वं तेन प्रस्थानौचित्यं गमयति। याते गते गत इति प्रास्थितेपि तस्मिन् स्वाश्रयसुतनुतनुनाशोवश्यंभावीत्याशयो व्यज्यते। यद्वा भीरुत्वं रत्नादिभिरपि प्रस्थानीकृतमिति भावः। विरहदाहे कोमलकमलसंबन्धिज्वालाजालमेव स्यादिति मालात्यागः अनुक्षणं क्षीयमाणाङ्गतया भारवहनासमर्थत्वेन हारादित्यागः। अन्यच्च किं ब्रूमः बाहोर्वलयम् हस्तसंबन्धिकङ्कणम् धमन्यपि 'नाडी तु धमनी शिरा' इत्यमरः। वर्तते तिष्ठति वा नवेति ज्ञातुमिव अहह खेदे। पाणिमूलम् हस्तमूलम्। प्रयाति गच्छति बाहोरिति षष्ठ्या स्वाश्रयबाहुसम्बन्धिशिरागवेषणस्यौचित्यं ध्वन्यते अपिना बहिरङ्गमालादिगमस्येतिनिर्गतित्वेऽनन्तरगते या शिराया अपि किमन्तरङ्गतास्ति गवेषणस्यावश्यकत्वं ध्वन्यते। अस्यावश्यकत्वं ध्वन्यते। अन्यापि कश्चिद्धि करस्य प्राणप्रयाणसमये शिरागवेषणं कुरुत इति। लौकिकम्। अत्र प्रागल्भ्यं स्फुटमेव। मन्दाक्रान्तावृत्तम् ॥ ४१ ॥

परकीया प्रोषितभर्तृका यथा--

श्वश्रूः पद्मदलं ददाति तदपि भ्रूसंज्ञया गृह्यते
सद्यो मर्मरशङ्कया न च तया संस्पृश्यते पाणिना॥
यातुर्वाचि सुहृद्गणस्य वचसि प्रत्युत्तरं दीयते
श्वासः किन्तु न मुच्यते हुतवहक्रूरः कुरङ्गीदृशा॥ ४२॥

सामान्यवनिता प्रोषितभर्तृका यथा--

विरहविदितमन्तःप्रेम विज्ञाय कान्तः
पुनरपि वसु तस्मादेत्य मे दास्यतीति॥

---

परकीयां प्रोषितभर्तृकामुदाहरति। श्वश्रूरिति। काचिन्नायिका वृत्तं काञ्चित्प्रत्याह। श्वश्रूर्भर्तृमाता यत्पद्मदलं ददाति। कौतुकेनेति भावः। तद्दयितया नायिकया भ्रूसंज्ञया भ्रूभङ्गसूचनेनैव गृह्यते परन्तु पाणिना करेण सद्यस्तत्कालम्। मर्मरशङ्कया मर्मरः शुष्कपर्णध्वनिः सोऽस्त्यस्मिन्निति। शुष्कमित्यर्थः। तत्संशयेन। अर्शआदित्वादच्। नच संस्पृश्यते श्वश्रूपदमनुल्लङ्घनीयाज्ञत्वं व्यञ्जयति। पद्मपदं कोमलतां ध्वनयति। ददातीत्यनेन दानस्य बुद्धिपूर्वकत्वं व्यञ्जयते। तदपीत्यनेनानुल्लङ्घनीयाज्ञश्वश्रूदत्तमपि पद्मदलं न गृह्यते। तत्रान्यदत्तग्रहणस्य का वार्तेति द्योत्यते भ्रूसंज्ञयेत्यनेन लज्जाविशेषप्रदर्शनाग्रहणजन्यकोपपरिहारः स्वस्य सतीत्वादिकं च ज्ञाप्यते सद्यो मर्मरशङ्कयेत्यनेन कतिपयकालं कमलदलस्य करसम्बन्धेऽवश्यं भस्मीभाव एव स्यादिति द्योत्यते। पाणिनेत्यनेन यत्र पाणिस्पर्शोपि न कमलदलस्य तत्र विरहानलायनहृदयसंनिवेशो दूरापास्त इति ध्वन्यते। एवं च प्रच्छन्नकामुकत्वं व्यज्यते। किञ्च यातुर्देवरपत्न्याः वाचि तथा सुहृद्गणस्य सुहृत्समुदायस्य च वचसि प्रत्युत्तरं प्रतिवचनं दीयते। किंतु कुरङ्गीदृशा नायिकया श्वासो निश्वासः न मुच्यते न प्रेर्यते। हुतवहक्रूरः हुतवहादनलादपि क्रूरः कठिनः अतिदाहक इत्यर्थः। यातुरित्यनेन सार्वकालिकसङ्गतिमत्तया प्रत्युत्तरभावो द्योत्यते दानस्यावश्यकत्वं ध्वन्यते। सुहृत्पदं प्रत्युत्तरदानौचित्यं गमयति॥ हुतवहपदं दहनसामर्थ्यं व्यञ्जयति। यातृसुहृत्पदाभ्यामन्यंप्रति प्रत्युत्तराभावो द्योत्यते। प्रत्युत्तरमित्येकवचनं प्रत्युत्तरान्तराभावं गमयति। निखिलेनापरपुरुषगोपनं व्यनक्ति। शार्दूलविक्रीडितं वृत्तम्॥ ४२॥

सामान्यवनितां प्रोषितभर्तृकामुदाहरति॥ विरहविदितमिति। काचि-

मरिचनिचयमक्ष्णोर्न्यस्य बाष्पोदबिन्दून्
विसृजति पुरयोषिद्द्वारदेशोपविष्टा ॥ ४३ ॥

अन्योपभोगचिह्नितः प्रातरागच्छति पतिर्यस्याः सा खण्डिता प्रातरित्युपलक्षणम् । अस्याश्चेष्टा अस्फुटालपचिन्तासन्तापनिश्वासतूष्णींभावाश्रुपातादयः ।

मुग्धा खण्डिता यथा—

वक्षः किमु कलशाङ्कितमिति किमपि प्रष्टुमिच्छन्त्याः
नयनं नवोढसुदृशः प्राणेशः पाणिना पिदधे ॥ ४४ ॥

---

त्काञ्चित्प्रति वक्ति विहरविदितम् विरहेण वियोगेन विदितं ज्ञातम् । अन्तःप्रेम अन्तर्मनसि प्रेम प्रीतिः । तां । ममेति भावः विज्ञाय यदियमेव विरहवती तर्हि मय्यतीव प्रीतिमती स्वविषयकं मत्प्रेमज्ञा चेत्यर्थः । कान्तः कामी तस्माद्देशान्तरादेत्यागत्य पुनरपि पूर्वं तु दत्तमेवेति भावः । वसु द्रव्यं दास्यति । वितरिष्यतीति हेतोरित्यर्थः । यद्यपि परकीयस्य विरहस्याप्ययोग्यतया न पुनस्तत्पक्षता तथाप्यऽश्रुपातादिनानुमेयता तस्य लिङ्गज्ञानत्वेनैव करणत्वात् । द्वारदेशे प्रतीहारप्रदेशे । उपविष्टा निविष्टा एवं च बहुभिरिदं दृष्टं तस्मै कश्चन कथयिष्यतीति धियेति भावः एवं च वञ्चनानिपुणत्वं व्यज्यते पुरयोषिद्वेश्या पुरयोषितपदेन वास्तवैकनिष्ठप्रेमशून्यत्वं ध्वन्यते अक्ष्णोर्नेत्रयोः । मरिचानिचयं मरीचिसमूहं निक्षिप्य वाष्पोदविन्दून् । अश्रुजलविन्दून् विसृजति प्रकटयति । मरीचानां तिक्तत्वाद्बाष्पोदकत्वमिति भावः । बिन्दूनिति बहुवचनं विरहातिशयप्रदर्शनकारित्वं व्यञ्जयति । मालिनीवृत्तम् ॥ ४३ ॥

अवसरप्राप्तां खण्डितां लक्षयति ॥ अन्योपभोगेति । नन्वन्यकालीनतथाविधपतिकत्वे खण्डितात्वं न स्यात्तथा चाव्याप्तिरित्यत आह प्रातरित्युपलक्षणमिति । अन्यकालस्येत्यादितल्लक्षणज्ञानाय तस्याश्चेष्टमाह । अस्या इत्यादि अस्फुटालापः । कोपजवाष्परुद्धकण्ठतया गद्गदवचनम् । चिन्ता तद्बोधस्येत्यादि तल्लक्षणज्ञानाय उदाहरणमाह । वक्ष इत्यादि । कलशाङ्कितं घटचिह्नितम् किमु वितर्कयामीत्यर्थः । मुग्धात्वात् वास्तवान्यनायिकाकुचाभोगचिह्नात् इच्छति इति पूर्वोक्तरीत्या किमपि कामपि काचित्प्रष्टुं प्रश्नं कर्तुमिच्छन्त्याः । लज्जावत्वादिति भावः । एवं चास्फुटालापोभिव्यज्यते नवोढसुदृशः नवोढाङ्गनायाः । नयनं नेत्रम् एकवचनं चिह्नविलोकनासक्त्यैकरूपं तां व्यञ्जयति प्राणेशो भर्ता प्राणेशपदं तथाविधप्रेमाभावं द्योतयति । यद्वा

मध्या खण्डिता यथा—

वक्षोजचिह्नितमुरो दयितस्य वीक्ष्य
दीर्घं न निःश्वसिति जल्पति नैव किञ्चित् ॥
प्रातर्जलेन वदनं परिमार्जयन्ती
बाला विलोचनजलानि तिरोदधाति ॥ ४९ ॥

प्रौढा खण्डिता यथा—

मामुद्वीक्ष्य विपक्षपक्ष्मलदृशः पादाम्बुजालक्तकै-
रालिप्ताननमानतीकृतमुखी चित्रार्पितेवाभवत् ॥

---

अनिवारणीयत्वम् पाणिना हस्तेन पिदधे आच्छादयति स्म ॥ उपगीतवृत्तम् ॥ ४४ ॥

मध्यां खण्डितामुदाहरति । वक्षोजचिह्नमिति । काचिन्नायिका वृत्तं कांचित्प्रत्याह । दयितस्य प्रियतमस्य वक्षोजचिह्नितं सपत्नीस्तनमुद्राङ्कितम् उरो वक्षःस्थलम् वीक्ष्य दयितपदं स्वनिरूपितप्रेमवत्त्वेप्येतादृशानुचिताचरणकार्यकारितया दुःखातिशयजनकत्वं ध्वनयति । चिह्नितपदं गाढालिङ्गनमभिव्यञ्जयति दीर्घमायतं निःश्वसिति निःश्वासं नोत्सृजति लज्जावशादितिभावः किञ्चिदपि ऋजुवक्रं वा नैव जल्पति नैव वदति एवं च समानलज्जामदनवत्वं ध्वन्यते । दुःखवत्त्वेपि दीर्घनिःश्वासजल्पनाभावाभ्यां दयिते निर्घृणत्वं व्यज्यते किंतु जलेन वदनं आननं परिमार्जयन्ती क्षालयन्ती बाला षोडशवार्षिकी नायिका । विलोचनजलानि अश्रूणि तिरोदधाति आच्छादयति विप्रियकारिणं प्रति तज्जनितदुःखप्रदर्शनाधिकविप्रियकारितैव स्यादिति चातुर्येण नैतदश्रुजलं किंतु वदनपरिमार्जनजन्यजलमिति गोपनमकरोदिति भावः । अत्र निःश्वासतूष्णींभावाश्रुपाताः स्फुटा एव । अत्रापह्नुतिरलंकारः । वसन्ततिलकावृत्तम् ॥ ४५ ॥

प्रौढां खण्डितामुदाहरति । मामुद्वीक्ष्येति कोपि नायकः सखायं वक्ति । हे सखे विपक्षपक्ष्मलदृशः प्रशस्तानि पक्ष्माणि यस्याः सा पक्ष्मला 'सिध्मादिभ्यश्च' इति लच् तथा दृग्यस्याः सा विपक्षा सपत्नी चासौ पक्ष्मलदृक् च तस्याः पादाम्बुजालक्तकैः चरणकमललाक्षारागैः । आलिप्ताननम् उत्तानरतिकरणादिति भावः । यद्वा पादपतनादिति भावः । आनतीकृतमुखी

रूक्षं नोक्तवती न वा कृतवती निःश्वासकोष्णे दृशौ
प्रातर्मङ्गलमङ्गना करतलादादर्शमादर्शयत् ॥ ४६ ॥

परकीया खण्डिता यथा—

कान्तं निरीक्ष्य वलयाङ्कितकण्ठदेशं
मुक्तास्तया परभिया परुषा न वाचः ॥
दूतीमुखे मृगदृशास्खलदम्बुपूरा
दूरात्परं निदधिरे नयनान्तपाताः ॥ ४७ ॥

---

नम्रीकृतवदना विप्रियकारिणो दर्शनाद्दर्शनमेव वरमिति धियेति भावः । चित्रार्पितेव आलेख्यनिवेशितेव अभवज्जाता विषादविमूढतयेति भावः । विपक्षपदं दुःखातिशयजनकत्वं व्यञ्जयति । पक्ष्मलदृक्पदं सौन्दर्यातिशयं ध्वनयति । अम्बुजपदं कोमलतां गमयति आलिप्तपदं गोपनायोग्यतां द्योतयति अनतीकृतसुखेत्यनेन किं मदधिकोपि प्रायेणायं श्यामासक्त इति स्वस्मिन्नपकर्षो ध्वन्यते यद्वा मामयं विहाय तस्यां गुणशून्यायामासक्तौ गुणानभिज्ञ एतादृशे चैतस्मिन्ममासक्तिर्मूर्खनिबंधनेति लज्जावत्त्वं व्यज्यते चित्रार्पितेत्यनेन दुःखवशान्निर्गतप्राणतुल्यता द्योत्यते किंच रूक्षं कठोरं नोक्तवती नानाविधोपायैराराधितोप्येतादृशमकरोत् किं पुनः कठोरवाक्यादिभिर्भर्त्सितः । किं किं न करिष्यतीति भावः । अथवा दृशौ लोचने न निश्वासकोष्णे दुःखजबाष्पैः किंचिदुष्णे न कृतवती पूर्ववद्भ्रुवः किंतु प्रातरुषसि अङ्गना नायिका मङ्गलं मङ्गलसूचकम् । आदर्शं दर्पणम् करतलात्पाणितलात् स्वस्येत्यर्थः आदर्शयत् दर्शयति स्म त्वमेव तादृश इति किमर्थं वक्तव्यं किंतु अयमेवादर्शोलक्तकं दृष्ट्वा स्वापराधं ज्ञास्यतीति धियेति भावः । प्रातःपदेनादर्शदर्शनस्य माङ्गलिकतयावश्यकर्तव्यत्वं द्योत्यते । अत्र निःश्वासकोष्णेत्यनेन संतापो रूक्षं नोक्तवतीत्यनेन चास्फुटालापो द्योत्यते । शार्दूलविक्रीडितं वृत्तम् ॥ ४६ ॥

परकीयां खण्डितामुदाहरति । कान्तमिति । काचित्कांचित्प्रत्याह तया मृगदृशा हरिणनयनया तयेत्यनेन विशेष्यनाम्नो निर्देशात्पूर्वपरिचितत्वं द्योत्यते तदपि कीर्तिभीतिचकितत्वं वा मृगदृशेत्यनेन चञ्चललोचनवत्त्वं तेन च जनाज्ञेयकामुकरतिकार्यकारित्वं जनत्रासवत्त्वं वा ध्वन्यते । वलयाङ्कितकण्ठदेशम् वलयैः कङ्कणैः परस्या इति भावः । अङ्कितश्चिह्नितः कण्ठदेशो ग्रीवाप्रदेशो यस्य तम् । आलिङ्गनविशेषेणेति भावः । कान्तं कमनीयरूपम् ।

सामान्यवनिता खण्डिता यथा—

उरस्तव पयोधराङ्कितमिदं कुतो मे क्षमा
ततो मयि निधीयतां वसु पुरा यदङ्गीकृतम् ॥
इति प्रचलचेतसः प्रियतमस्य वारस्त्रिया
क्वणत्कनककङ्कणं करतलात्समाकृष्यते ॥ ४८ ॥

---

कान्तपदं दुर्लभत्वं तच्च सक्तान्यसंगदुःसहत्वं व्यञ्जयति । निरीक्ष्य विलोक्य निरीक्ष्य इत्यनेन वलयचिह्नं यथार्थज्ञानवत्त्वं ध्वन्यते । परभिया परपदं भीतिजननयोग्यतां ध्वनयति । अन्यभीत्या प्रच्छन्नकामित्वादिति भावः । परुषा निष्ठुरा वाचः नोक्ताः किंतु दूतीमुखे संचारिकावदने इति पदं कोपार्हतां गमयति स्खलदम्बुपूराः स्खलन्परभीत्या किंचित्पतन्नम्बुपूरोऽश्रुसमूहो येषु ते पूरपदं बाहुल्यम् तच्च दुःखातिशयमभिव्यञ्जयति दूरात् निदधिरे निक्षिप्ताः आत्मदोषस्य फलवैचित्र्यमेतत् तद्विलोकयस्वेति भावः । यद्वा त्वमेवैनमनुशाधि धियेति भावः । दूरादित्यनेन दूतीमुखावलोकने भीतिस्तत्र किमु वाच्यं कान्तं प्रतीति प्रच्छिन्नकामुकाभिलाषित्वं व्यज्यते । अत्र स्खलदम्बुपूरेत्यनेनाश्रुपातः स्पष्ट एव । नयनान्तपाता इत्यनेन किमतः परं विधेयमिति चिन्ता व्यज्यते । वसन्ततिलका वृत्तम् ॥ ४७ ॥

सामान्यवनितां खण्डितामुदाहरति । उरस्तवेति । काचित्कांचिद्वक्ति । हे शठ तवेदम् उरो वक्षः पयोधराङ्कितम् अन्यसामान्यवनितास्तनचिह्नितम् । तवेत्यनेनादरात् संतापो द्योत्यते पयोधरपदं गुरुतामावेदयति इदमिति गोपनानर्हतां द्योतयति स्तनगुरुतया चिह्नजननसामर्थ्यं । तावता किमित्यत आह मे कुतः कस्माद्धेतोः क्षमा तितिक्षा तव तादृशापराधसहन इति भावः । फलितं वक्ति अतः पूर्वहेतोः मयि मद्विषये पुरा पूर्वं यत् वसु द्रव्यम् अङ्गीकृतं प्रतिश्रुतं तन्निधीयतां प्रदीयताम् इत्युक्त्वा वारस्त्रिया गणिकया 'वारस्त्री गणिका वेश्या' इत्यमरः । वसुपदं त्यागायोगानर्हत्वं द्योतयति । अंगीकृतमित्यनेनावश्यदेयत्वं द्योत्यते । इतिहेतो प्रचलचेतसः चञ्चलचेतसः अत्राऽऽगमनप्रतिज्ञां कृत्वा अन्यत्र गतत्वादिति भावः । चञ्चलपदप्रेमदर्शनाभावं द्योतयति । तच्च सद्योद्रव्यग्रहणयोग्यत्वं । प्रियतमस्य कान्तस्य तमेवविवक्षितः । यद्वा द्रव्यवत्वेन प्रियत्वात् तत्सार्थक्यं करतलाद्धस्तात् क्वणत्कनककङ्कणं स्वनत्सुवर्णवलयं करतलमिति तु युक्तः पाठः । समाकृष्यते हठादाकृष्यते । पृथिवीवृत्तम् ।४८।

पतिमवमत्य पश्चात्परितप्ता कलहान्तरिता अस्याश्चेष्टा भ्रान्तिसन्तापसंमोह-निःश्वासज्वरप्रलापादयः ।

मुग्धा कलहान्तरिता यथा—

अनुनयति पतिं न लज्जमाना
कथयति नापि सखीजनाय किंचित् ॥
प्रसरति मलयानिले नवोढा
वहति परंतु चिराय शून्यमन्तः ॥ ४९ ॥

मध्या कलहान्तरिता यथा—

विरमति कथनं विना न खेदः
सति कथने समुपैति कापि लज्जा ॥
इति कलहमधोमुखी सखीभ्यो-
लपितुमनालपितुं समाचकाङ्क्ष ॥ ५० ॥

---

प्राप्तावसरत्वात्कलहान्तरितां लक्षयति । पतिमवमत्येति । स्वकृतप्रत्यवमानेनोत्तरपरितापवत्त्वमित्यर्थः । उक्तं च 'कलहान्तरिता मर्षाद्विधुतानुशयार्तियुक्' इति । लक्षणज्ञापनक्रियामाह। अस्या इति । भ्रान्तिर्मिथ्यामतिः । संतापोऽनुतापः । संमोह इन्द्रियवैकल्यम् । मुग्धां कलहान्तरितामुदाहरति । काचित्कांचित्प्रत्याह नवोढा मुग्धा लज्जमाना सव्रीडा पतिं भर्तारं कलहेनावमानितमिति भावः । न अनुनयति सांत्वयति किंच सखीजनाय सखीसमूहायापि जनपदेन समूहमध्ये एकामपि स्वकीयं । हृद्गतमकथयत् इति लज्जावत्त्वं द्योत्यते किंचिदपि किं विधेयमित्यादि न कथयति किंतु मलयानिले मलयसंबन्धिसमीरे विरहिदाहक इति भावः मलयपदं सौगन्ध्यमावेदयति अनिलपदमनिवारणीयतां द्योतयति प्रसरति चिराय बहुकालशून्यं प्रतिपत्तिरहितं शून्यं इत्यनेन संमोहो द्योत्यते अंतः अंतःकरणम् भीमो भीमसेन इतिवत् नामैकदेशे नामप्रयोगः वहति धारयति विरहविषण्णतयेति भावः । पुष्पिताग्रा वृत्तम् ॥ ४९ ॥

मध्यां कलहान्तरितामुदाहरति । विरमतीति। कथनं विना ख्यापनंविना 'पृथग्विना' इति द्वितीया खेदो दुःखम् न विरमति नापगच्छति निवेद्य दुःखं सुखी भवतीति भावः । एवं न्चावश्यकथनीयत्वं द्योत्यते किञ्च कथने सति खेदे निवेद्यमानेपीति कापि दुर्निवारा लज्जा

प्रौढा कलहान्तरिता यथा—

अकरोः किमु नेत्रशोणिमानं
किमकार्षीः करपल्लवावरोधम्॥
कलहं किमधाः क्रुधा रसज्ञे
हितमर्थं न विदन्ति दैवदष्टाः॥ ९१॥

परकीया कलहान्तरिता यथा—

भर्तुर्यस्य कृते गुरुर्लघुरभूद्गोष्ठी कनिष्ठीकृता
धैर्यं कोशधनं गतं सहचरी नीतिः कृता दूरतः॥

---

त्रपा अधाष्टर्येनेति भावः इति हेतोः अधोमुखी नम्रवदना लज्जावशादिति भावः सखीभ्यः लपितुं वक्तुं अनालपितुमवक्तुं समाचकांक्ष अत्र मध्यात्वं स्फुटमेव। इयमपि पुष्पिताग्रावृत्तम्।५०।

प्रौढां कलहान्तरितामुदाहरति। अकरोरिति। कापि नायिका परितापवशान्नेत्रादीन्प्रत्याह हे नेत्र नयति विलोकनविशेषेणाखिलसुखजातं येन तत्संबोधनम्। शोणिमानं रक्तिमानम् किमित्यकरोः कुपितप्रसादतां संपादनानिपुणस्यापि तवैतादृशारुण्यप्रदर्शनेनेति कोपोत्पादनमनुचितमिति व्यज्यते। किंच हे करपल्लव करकमल तर्जनं वा किमित्यकार्षीः। कमलपदं कोमलतां तापोपशमनशीलतां च व्यञ्जयति सा च तादृशवर्जनकारणानौचित्यं। किंच रसज्ञे रसाभिज्ञे रसने क्रुधा कोपेन कलहं किमधाः कृतवती नायकविषयत्वं सर्वत्र रसाभिज्ञत्वान्नेत्रकरयोरारुण्यादिकरणेपि नातीवापराधोरसाभिज्ञत्वात्तत्रैतादृशकरणेत्यन्तमपराध इति भावः। एवं च नयनारुण्यादेरन्यथापि समर्थनीयत्वेन नायकस्य न तथा त्वत्कृतविग्रहस्येति व्यज्यते युक्तमिदं दैवहतानामित्याह। दैवदष्टां प्रतिकूलदैवाहितमनुकूलार्थं न विदन्ति न जानन्ति क्रोधान्ध्यादितिभावः एवंच भवद्भिस्त्वे पूर्वं सविलासकटाक्षविक्षेपवसनाञ्चलाकर्षणद्राक्षासदृशाक्षरवचनपरिहासवचनरनाभिर्यच्चित्तं स्वायतं कृतम् अमूर्तैर्भवद्भिः इदानीं तं प्रत्येवैवंकृतमिति न संभवति किंतु दुर्दैवकृतमिति भवतामपराधइति ध्वन्यते। अत्रानुतापः स्पष्टमेव। मालभरणीयोवृत्तम्॥ ५१॥

परकीयां कलहान्तरितामुदाहरति भर्तुरिति। काचिन्नायिका सखीं प्रत्याह हे मातः मातरित्यनेन स्वानुचिताचरणप्रकाशनार्हत्वं व्यज्यते यस्य भर्तुः कृते गुरुः श्वशुरादिः लघुरगण्यः अभूत् अर्थान्मयेतिशेषः गोष्ठी सती 'समज्यापरिषद्गोष्ठीसभा' इत्यमरः। कनिष्ठीकृता

निर्मुक्ता तृणवत्त्रपा परिचिता स्रोतस्विनी बिन्दुव-
त्स क्रोधादवधारितो हत धिया मातर्बलीयान्विधिः ॥ ९२ ॥

सामान्यवनिता कलहान्तरिता यथा——

यत्पङ्केरुहलक्ष्मपाणिकमलं भाग्यालये यद्गुरु-
र्न्यस्तं वा मम यल्ललाटफलके भाग्याक्षरं वेधसा ॥
तत्सर्वं सखि योयथार्थमकरोत्तस्मिन् प्रकोपः कृतो
धिङ् मां धिङ् मम जीवितं धिगतनुं धिक् चेष्टितं धिग्वयः ॥९३॥

---

निन्दिता यत्र सती सभायामभ्यर्हिततमेयमीदृगनुचिताचारवती तत्र ता अप्यनुचिताचारवत्य इति तासामपि मया निन्दासंपादितेत्यनुचितमिति व्यज्यते। कोशधनं तन्निष्ठद्रव्यरूपं धैर्यं गाम्भीर्यं गतं नष्टं। कोशपदेनाविपदुपयोगित्वं ध्वन्यते तेन तदातिशयस्यातिदुःसहत्वं व्यज्यते सहचरी नियतनिकटसंचारिणिकीर्तिः दूरतः कृता तिरस्कृता इत्यर्थः सहचरीति पदं त्यागानर्हतां गमयति नीतिपदमवश्यविधेयत्वं द्योतयति त्रपा लज्जा तृणवत्तृणतुल्यम् 'तेन तुल्यम्' इतिवतिः। त्रपापदमवश्याङ्गीकरणीयत्वं व्यञ्जयति। तृणपदमगणनीयत्वं ध्वनयति। निर्मुक्ता त्यक्ता एवं च त्यागबुद्धिपूर्वकत्वं ध्वन्यते। किंच स्रोतस्विनी स्रोतः प्रवाहोस्यास्तीति स्रोतस्विनी अगाधजलापि नदी संकेतमार्गवर्तिनीत्यर्थः बिन्दुवत्परिचिता अभ्यस्ता स्रोतस्विनीपदमनुल्लंघनीयत्वं द्योतयति। बिन्दुपदं शीघ्रोल्लन्घनीयत्वं गमयति सः यदर्थमेवं साहसं कृतं सोपीत्यर्थः क्रोधात् कोपात् हतधिया नष्टबुद्ध्या मया अवधारितः अधिकृतः ननु यदर्थमेतावत्साहसं कृतं तं प्रति मया कोपः कृत इति न संभवति। तस्मात्सर्वमेतद्दैवकृतमित्याह विधिर्दैवं बलीयान् एतादृशानुचितकार्यकरणेपि समर्थः तथा च नापराधो मदीय इतिभावः अत्रानुतापस्तु स्फुट एव। शार्दूलविक्रीडितं वृत्तम् ॥ ५२ ॥

वेश्यां कलहान्तरितामुदाहरति। यत्पङ्केरुहेति। काचिन्नायिका सखीं प्रत्याह हे सखे पाणिकमलं करकमलम् यत्पङ्केरुहलक्ष्म पंकेरुहं कमलम् भाग्यसूचकमित्यर्थः तल्लक्ष्म चिह्नं यस्य 'चिह्नं लक्ष्म च लक्षण'मित्यमरः। किंच मम इदं च सर्वत्रान्वेति भाग्यालये भाग्यभवने। गुरुर्बृहस्पतिः। भाग्यसूचकमित्यर्थः 'गीष्पतिर्धिषणो गुरुः' इत्यमरः। किंच ललाटफलके ललाटपट्टे ब्रह्मणा भाग्याक्षरं भाग्यसूचकवर्णकदम्बकं न्यस्तं निक्षिप्तम्। एवं च ब्रह्मणालिखि-

संकेतनिकेतने प्रियमनवलोक्य सदाकुलहृदया विप्रलब्धा । अस्याश्चेष्टा निर्वेदनिःश्वाससखीजनोपालम्भचिन्ताश्रुपातमूर्च्छादयः । मुग्धा विप्रलब्धा यथा—

आलिभिः शपथैरनेककपटैः कुञ्जोदरं नीतया
शून्यं तच्च निरीक्ष्य विक्षुभितया न प्रस्थितं न स्थितम् ॥

---

तमेतावदेव परं तु तल्लिखनस्य याथार्थ्यमनेनैव कृतमिति वेधसोप्यधिकत्वमावेद्यते । तत्सर्वं पङ्केरुहलक्ष्मादि यथार्थम् बहुतरधनदानेनेतिभावः अकरोत् कृतवान् अकरोदित्यनेन सकलभाग्यसंपादकतयाऽनुभूतत्वात् तस्मिन्नपि प्रकोपकरणस्यात्यंतमनौचित्यमभिव्यज्यते इति मां धिक् गर्विताहं तादृशेपि एतादृशानुचितचरणविधानादिति भावः एवं च प्रकोपे कृतेऽधुना जीवितमिदमत्यन्तानुचितमित्याह मम जीवितमपि धिक् अथ जीवनेप्येतादृशौदार्याभाववति नायकान्तरे रतिरत्यन्तानुचितेत्याह अतनुं कामम् धिक् रतिजनकत्वादितिभावः यद्वा स्वत एवैतादृशदानशीलेपि परमवित्तमात्रोपाधिक एवानुराग उत्पादितोनेन तत्र तिरस्कारकचेष्टादिकमनुचितमित्याह धिक् चेष्टितमिति एतादृशपतितिरस्कारकारकचेष्टाकरणेपि यद्वयस्तारुण्यादि धिगस्तु एवं चैतादृशतारुण्यभोक्ता न कोपयितव्य इति भावः । अनुतापश्चात्रापि स्फुट एव । शार्दूलविक्रीडितं वृत्तम् ॥ ५३ ॥

प्राप्तावसरत्वाद्विप्रलब्धां लक्षयति । सङ्केतनिकेतन इति । सङ्केतस्थलप्रत्यनवस्थानज्ञानविमनायमानत्वमित्यर्थः । लक्षणज्ञानाय चेष्टामाह । अस्याश्चेष्टेति । निर्वेदः स्वावमानं सखीजनोपालम्भः सनिन्दपरिभाषणं चिन्ताऽनागमनहेतुज्ञाने चित्तैकाग्रता । मूर्च्छेन्द्रियवैकल्यम् तत्र मुग्धां विप्रलब्धामुदाहरति । आलिभिरिति । काचित्काञ्चित्प्रत्याह । आलिभिः सखीभिः 'आलिः सखी वयस्या च ' इत्यमरः । एवं च श्वसनीयत्वं व्यज्यते बहुवचनमप्रतिषेध्यत्वं ध्वनयति । अनेककपटैरनेकव्याजैः ' कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतव ' इत्यमरः । शपथैः कुञ्जोदरं शून्यम् लतागृहमध्यं सङ्केतीकृतमित्यर्थः । एवं च निकुञ्जगमनस्योचितत्वं ध्वन्यते नीतया प्रापितया एवं च मुग्धात्वमभिव्यज्यते तच्च लतागृहं शून्यं प्रियरहितं शून्यपदमनवलोकनीयतां गमयति । निरीक्ष्य विलोक्य विक्षुभितया विमनस्कया प्रियविरहचिन्ताभ्यामिति भावः । न प्रस्थितं चलितं प्रियसमागमनसम्भावनयेति भावः । न स्थितं प्रियतमस्य प्राप्त्यभावत्वादिति भावः । यदि गतं तदा कदाचिदागामिप्रियतमदर्शन-

न्यस्ताः किंतु नवोढनीरजदृशा कुञ्जोपकण्ठे रुषा
ताम्यद्भृङ्गकदम्बडम्बरचमत्कारस्पृशो दृष्टयः ॥ ९४ ॥

मध्या विप्रलब्धा यथा—

संकेतकेलिगृहमेत्य निरीक्ष्य शून्य-
मेणीदृशो निभृतनिःश्वसिताधरायाः ॥
अर्धाक्षरं वचनमर्धविकाशि नेत्रं
ताम्बूलमर्धकवलीकृतमेव तस्थौ ॥ ९९ ॥

---

सम्भाविस्थितं यदि तदा तद्रहितो निकुञ्जो दुःखं दास्यतीति किंकर्तव्यमिति विचार्य व्याकुलता व्यज्यते । किं तर्हि कृतवती नवोढनीरजदृशा नवोढाङ्गनया नीरजपदमश्रुपातं व्यञ्जयति । कुञ्जोपकण्ठे निजकुञ्जप्रान्ते रुषा कोपेन । ताम्यद्भृङ्गकदम्बडम्बरचमत्कारस्पृशः । ताम्यन्तोव्याकुलाः स्वाभिलषिताप्राप्त्येतिभावः । ये भृङ्गा भ्रमराः तेषां कदम्बो वृन्दम् । 'निकुरम्बं कदम्बकम्' इत्यमरः । तेषां डम्बरं आरम्भमिति यावत् तस्य चमत्कारा विलासविशेषाः तान्स्पृशन्त्यङ्गीकुर्वन्ति ॥ तत्तुल्यइत्यर्थः । दृष्टयो दृक्पाताः न्यस्ताः परितः क्षिप्ताः कथमेताभिः सखीभिरपि प्रतार्यात्राहमानीता । प्रियतमस्तु नाद्याप्यायातीति कोपवशात्प्रियतमागमनमार्गभूतनिकुञ्जप्रान्तभूमावेव दृक् प्रेरितेतिभावः । यद्वा एतादृशकपटकारिण्यः सख्यो न द्रष्टव्या इति धिया कुञ्जप्रान्तमवलोकयामासेति भावः । यद्वा प्रियतमशून्यनिकुञ्जेवस्थितौ कामपीडा स्यात्परदीपेन यथाऽऽगतैनैव गन्तव्यं तदैताभिः प्रतिवन्धः कर्तव्य एवेत्यतोमार्गान्तरविलोकनार्थं कुञ्जान्तरे दृष्टिमकरोदिति भावः । ताम्यत्पदं दुःखवत्त्वं ध्वनयति । भृङ्गपदं श्यामतामभिव्यञ्जयति कदम्बपदं विकटकटाक्षवत्तां गमयति डम्बरपदं कम्पक्षेपप्रौढतामभिव्यञ्जयति चमत्कारपदं चित्ताकर्षकतामभिव्यञ्जयति । शार्दूलविक्रीडितं वृत्तम् ॥ ५४ ॥

मध्यां विप्रलब्धामुदाहरति । संकेतकेलीति । काचिन्नायिका कांचित्प्रत्याह संकेतकेलिगृहं संकेतीकृतकेलिसदनम् एकवचनेनातिस्पृहणीयत्वं ध्वन्यते एत्यागत्य प्रियतमसंगमेच्छयेति भावः निभृतनिःश्वसितं चात्र स्फुटमेव एणीदृशो मृगलोचनायाः प्रियाप्तिकारणतयेतिभावः एणीपदं विशालवत्त्वं चलत्वं च द्योतयति अर्धाक्षरम् अर्धान्यसंपूर्णान्यक्षराणि वर्णा यत्र तथा वचनं वाक्यम् तस्थौ स्थितम् इदं चाग्रेप्यन्वेति । अर्थात्सखीं प्रति एवं च यथाकथंचिद्वक्तुमुप-

प्रौढा विप्रलब्धा यथा—

शून्यं कुञ्जगृहं निरीक्ष्य कुटिलं विज्ञाय चेतोभवं
दूती नापि निवेदिता सहचरी पृष्टापि नो वा तया ॥
शंभो शंकर चन्द्रशेखर हर श्रीकण्ठ शूलिन् शिव
त्रायस्वेति परंतु पङ्कजदृशा भर्गस्य चक्रे स्तुतिः ॥ ९६ ॥

---

क्रान्तमेकमपिवाक्यं न संपूर्णाक्षरं वक्तुं शक्यमिति तात्कालिकी मदनबाधाभिव्यज्यते यद्वा लज्जा-मदनसाम्यमभिव्यज्यते न केवलं वचनमेव तथाजातमपि तु विलोकनमपि तथेत्याह किंच अर्धविकाशि अर्धः विकाशो यत्र तदर्धविकाशि नेत्रं नयनम् व्यङ्ग्यं पूर्ववदेव शून्या चेयं दृष्टिः । उक्तं च ॥

निष्कम्पासमतारा या मलिना शून्यदर्शना ।
तथा समपुटा वाह्यविषयेषु गतस्पृहा ।
सा दृष्टिः कथिता शून्या धीरैश्चिन्तानिरूपणे ।

इति । किंच ताम्बूलम् अर्धकवलीकृतम् एवं अर्धचर्वितमेव यत्र गृहीतमपि ताम्बूलं न चर्वितं तत्राऽन्यकार्यकरणवार्ता क्वेति भावः । यद्वा यदर्थं एतत्ताम्बूलचर्वणादि शृङ्गाररचना स एवात्र नास्तीति व्यर्था सेति अतस्तदवस्थितेत्यर्थः । अतस्तथैव स्थितेत्यर्थः । एवं च प्रियविरहवशाज्जडतामापन्नेति ध्वन्यते । वसन्ततिलका वृत्तम् ॥ ५५ ॥

प्रौढां विप्रलब्धामुदाहरति । शून्यमिति । कोचित्कांचित्प्रत्याह कुञ्जलतागृहम् संकेतीकृतम् एकवचनेनातिस्पृहणीयत्वं व्यज्यते । शून्यं प्रियरहितम् शून्यपदमनवलोकनीयतां द्योतयति निरीक्ष्य अतएव तद्विरहेण चेतोभवं मदनम् चेतोभवपदमनिवारणीयतां ध्वनयति कुटिलं क्रूरम् पीडाजनकमित्यर्थः । कुटिलपदं दुःसहत्वं व्यञ्जयति । विज्ञाय ज्ञात्वा दूत्यपि परिसंचारिकापि न निवेदिता न लापिता प्रियानयनार्थमितिभावः दूतीपदं प्रियसंगमसंपादनयोग्यतां व्यञ्जयति किंच सहचर्यपि नो पृष्टा प्रियवृत्तान्तं प्रति किमतःपरं विधेयमिति भावः । सहचरीपदं प्रियानागमनहेत्वपराधज्ञतां ध्वनयति एवं च दूतीनिवेदनसखीप्रश्नकरणकालमध्य-एवक्रूरविषशरीरशराघातैर्मरणमेव स्यादिति तमनादृत्य मदनरिपुमहेश्वरस्तुतिसमारम्भणेन विरहकातरताभिव्यज्यते किं तर्हि कृतवतीत्याह परंतु एवंकृतमित्यर्थः तया नायिकया शंभो सुखोत्पादक एवं च सुखजनकस्वभावतया मम तत्संपादनस्यौचित्यं तवेति ध्वन्यते । ननु सुखजनकत्वेपि सर्वदा तद्धरत्वे प्रमाणा-

भावात् कथं तव तत् जननीयमत आह शंकरेति शं सुखं करे हस्ते यस्य एवं च सर्वदा तव करतल एव सुखमस्तीति तद्दाने न कोपि तवायास इति व्यज्यते। ननु करस्थितमपि सुखं किमर्थमन्यस्य देयमित्यत आह चन्द्रशेखरेति चन्द्रयत्याह्लादयतीति चन्द्रः स शेखरे मस्तके यस्य एवं च सुखजनकस्याऽस्य चन्द्रस्य परोपकारवत्त्वमालोच्यैनं स्वशिरसि धृतवानसि तस्मात्परसुखसम्पादकश्चन्द्रोपि शिरसीति तव सुखप्रदानस्यातिसुलभत्वमित्याह। चन्द्रशेखरेति यद्वा करस्थितं सुखमेकस्य दत्तं चेत्तदाऽग्रेऽन्यस्य किं देयमिति शङ्का न कार्येत्याह चन्द्रशेखरेति आस्तां दूरे सुखजनकत्वं दुःखहारकत्वं तवाधीनमित्याह हरेति हरति सर्वं दुःखमिति हरः एवं च दुःखहरणस्वभावत्वेन तत्करणस्य सुशक्यतया तत्सम्पादनस्यौचिती द्योत्यते नन्वेतदेतस्य कथमवधृतमत आह। श्रीकण्ठेति। एवं च सकललोकदुःखदकालकूटगिलनेन समस्तजनदुःखापहारकालस्यावधृतत्वात् मद्दुःखापहारकत्वं न तव दुर्लभमिति ध्वन्यते। नन्वेतस्य परदःखदूरीकरणे का वा सामग्र्यत आह। शूलिन्निति ननु परदुःखापनोदनार्थं प्रवृत्तौ स्वस्यैव चेद्दुःखमापद्येत तदा कथं तद्विधेयमत आह शिवेति एवं च कल्याणस्वरूपस्य तव न कुतश्चिदपि दुःखमिति तत्परिहारकत्वं तवातिसुलभमिति व्यज्यते यद्वा सुखजनकत्वेपि किमर्थं तव सम्पादनीयमत आह। शङ्करेति। एवं च दानार्थं करे गृहीतं सुखं यस्मै कस्मैचिद्देयमेव तत्रातिदैन्यपात्रभूतायाः ममैव तद्दातुमुचितमिति व्यज्यते। नन्वन्येषां मम सुखजनकत्वं सुलभं तव तु मदनबाधाक्रान्तायाः कथं तदित्यतआह। चन्द्रशेखरेति एवं च मदनमहीपतिमित्रस्य चन्द्रस्य तव चातिप्रीतिमत्तया तद्द्वारा तद्बाधानिवारणस्यातिसुकरत्वमिति व्यज्यते। यद्वा मदनमित्रचन्द्रस्य त्वदधीनत्वेन परस्परभेदस्य सिद्धत्वात्तन्निवारणोपायज्ञानं सुकरमिति ध्वन्यते। यद्वा मदनोपि चन्द्राद्युद्दीपनद्वारैव दुःखदाने स्वतस्तच्च तवाधीनमित्येतज्जन्यपीडानिवारणेन तत्पीडा निवारितप्रायैवेतिद्योत्यते न केवलं चंद्रपीडानिवारणे मदनपीडानिवारकत्वमपि तु तन्नाशोपि तव सुकर इत्याह हरति स्मरमिति हरः एवं च मूलोच्छेदे पुरुषव्यापार इति तन्नाशकरणमेव तवोचितमिति व्यज्यते। ननु करुणार्णवशालिनो मम भगवतस्तन्नाशने दूषणमेव स्यादित्यतआह श्रीकण्ठेति। एवं च सकलजनसंतापजनकगरलगिलनं संभूषणमेव यथा तव संजातं तथा विरहिजन जीवनविनाशनमदननाशोपीति व्यज्यते। ननु पूर्वमेकदा विनाशितोपि न पुनर्जीवनमवाप्तवानिति तद्विनाशोऽनर्थक इत्यत आह शूलिन्निति एवं चेदानीं त्रिशूलेन तथान्त्रादिविदारणपुरःसरं मारणीयो यथा न पुनरेतज्जीवनमिति ध्वन्यते। ननु तथापि त्रिभु-

परकीया विप्रलब्धा यथा—

दत्वा धैर्यभुजङ्गमूर्ध्नि चरणावुल्लंघ्य लज्जानदी-
मङ्गीकृत्य घनान्धकारपटलं तन्व्या न दृष्टः प्रियः ॥
सन्तापाकुलया तया च परितः पाथोदरे गर्जति
क्रोधाक्रान्तकृतान्तमत्तमहिषभ्रान्त्या दृशौ योजिते ॥ ९७ ॥

---

वनाभिरामस्य कामस्य विनाशे ममाऽकल्याणमेव स्यादित्यत आह शिवेति । एवं च कल्याणरूपस्य तवाकल्याणमसंभावीति तद्वधे न कापि शङ्का कार्येत्यभिव्यज्यते ॥ त्रायस्व क्षिप्रं रक्षस्व इति पङ्कजदृशा कमलनयनया पङ्कजपदं मलिनतामावेदयति सा च चिन्ताविशेषम् । भर्गस्य भृजत्यग्निना स्मरमिति भर्गः स्मरहरस्तस्य स्तुतिः स्तोत्रं चक्रे क्रियते स्म भर्गपदं मदनविनाशसामर्थ्यं ध्वनयति भर्गस्य स्तुतिकरणेन त्रस्तः कामो न पीडयिष्यतीति धियेति-भावः । अत्र अप्रस्तुतप्रशंसालंकारः स च काव्यलिंगानुप्राणितः । शार्दूलविक्रीडितं वृत्तम् ॥ ५६ ॥

परकीयां विप्रलब्धामुदाहरति । दत्वेति । काचित्कांचित्प्रत्याह धैर्यभुजंगमूर्ध्नि धैर्यभुजंगः सर्पः अन्यैरनाक्रमणीयत्वादिति भावः तस्य मूर्ध्नि शिरसि चरणौ पादौ दत्त्वा निक्षिप्य धैर्यपदं त्यागानर्हतां गमयति भुजंगपदं क्रूरतातिशयं द्योतयति स च चरणदानानर्हत्वं । मूर्धेत्यनेन साहसातिशयो व्यज्यते । दत्वेत्यनेन बुद्धिपूर्वकत्वमावेद्यते चरणाविति द्विवचनेन भीतिशून्यत्वमावेद्यते यद्वा धैर्यं च भुजंगश्च तयोर्मूर्ध्नीत्यर्थः एवं च धैर्योल्लंघनेपि मार्गे भुजंगममस्तके पदार्पणपुरस्सरागमनेन प्रियतमसंगमनिमग्नचित्तत्वं द्योत्यते लज्जानदीं लज्जानदीव ताम् अलंघ्यत्वादिति भावः उल्लंघ्योत्तीर्य । यद्वा लज्जाया सह नदीमपीति सहोक्तिः किंच घनान्धकारपटलम् घनं निविडमन्धकारपटलं तमः स्तोमम् अंगीकृत्योपगम्य आगतयेतिशेषः यद्वा घनैर्मेघैर्यदन्धकारपटलमिति एवंच निविडतरतडिल्लतावितानमेघपटलरूपभीतिहेतुमत्यपि काले प्रस्थानकरणेन साहसमभिव्यज्यते । खलान्धकारपटलमिति च पाठे खलाः दुष्टाः अंधकारपटलमिव गमनादिप्रतिबंधकत्वादिति भावः एवं च दुष्टगणनापि न कृतेति साहसातिशयो द्योत्यते । तन्वंग्याः प्रियादर्शन चिंतयेतिभावः । प्रियः संकेतित इति भावः । न दृष्टः संकेतस्थलइत्यर्थः । किं कृतवतीत्याह चेत्यनंतरम् संतापाकुलया संतापव्यग्रया तया पाथोधेर ' कबंध-

सामान्यवनिता विप्रलब्धा यथा—

कपटवचनभाजा केनचिद्वारयोषा
सकलरसिकगोष्ठीवञ्चिका वञ्चितासौ ॥
इति विहसति रिंगद्भृङ्गविक्षिप्तचक्षु-
र्विकचकुसुमकांतिच्छद्मना केलिकुञ्जः ॥ ५८ ॥

---

मुदकंपाथ ' इत्यमरः गर्जति शब्दायमाने सति ॥ एवं चैवं विधोद्दीपनविभावनतया संतापातिशयो व्यज्यते। क्रोधाक्रांतकृतांतमत्तमहिषभ्रांत्या क्रोधेन कोपेन आक्रांतो वशीकृतः कृतांतो यमः ' कृतांतो यमुनाभ्राता ' इत्यमरः। तस्य मत्त उन्मत्तः महिषः जिघांसयेति भावः तस्य भ्रान्त्या भ्रमेण परितो दिक्षु विदिक्षु च दृशौ नेत्रे योजिते प्रेरिते क्रोधपदं दुःसहनामावेदयति आक्रांतपदमसमाधेयतां व्यञ्जयति कृतांतपदं सर्वविनाशकतां ध्वनयति। मत्तपदमनिवारणीयतां गमयति महिषपदं दुःखितस्य दुःखजननमनुचितमिति शून्यतां द्योतयति ॥ निखिलं च मेघगर्जनकुपितकृतांतमहिषशब्दभ्रमेण त्रासातिशयमभिव्यनक्ति स च विरहातिशयम्। अत्र भ्रांतिमदलङ्कारः। स च रूपतुल्ययोगितासहोक्तिभिः संसृष्टः उक्तं च ' तद्रूपकमभेदोयमुपमानोपमेययोः ' इति तथा-' नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगितेति। सहोक्तिः सहभावश्चेदिति। शार्दूलविक्रीडितं वृत्तम् ॥ ५७ ॥

सामान्यवनितां विप्रलब्धामुदाहरति। कपटेति। कपटवचनभाजा कपटवचनानि भजतीति कपटवचनभाक् तेन भजतीत्यनेन निरन्तरकापट्यशालित्वं द्योत्यते केनचित्पुरुषेण सकलरसिकगोष्ठीवंचिका सकलाः समग्रा ये रसिकास्तरुणाः तेषां गोष्ठी समाजः तस्या वंचिका प्रतारिकापि कृत्रिमैर्भावैर्धनग्रहणादिश्चेतिभावः। सकलरसिकपदं वंचनायोग्यतां ध्वनयति गोष्ठीपदं बहूनां प्रतारकतया वचनचातुरीविशेषं गमयति। असौ वारयोषा वंचिता प्रतारिता इति हेतोः रिंगद्भृंगविक्षिप्तचक्षुः रिंगद्भृंगाश्चंचलभ्रमराः त एव विक्षिप्ते चक्षुषी येन सः केलिकुंजः विकचकुसुमकांतिछद्मना विकसितपुष्पव्याजेन। हसतीव सकलचतुरकामिजनवंचननिपुणापि केनापि प्रतारितेति विस्मयादिति भावः। अत्रोत्प्रेक्षालङ्कारः। स चातिशयोक्तिरूपकापन्हुतिभिः संसृज्यते। मालिनीवृत्तम् ॥ ५८ ॥

सङ्केतस्थलंप्रति भर्तुरनागमनकारणं या चिन्तयति सोत्का अवधिदिवसानागतप्रेयसि प्रोषितपतिकायां नातिव्याप्तिः तस्याभर्तुरवधिदिवसे भवनागमननियम इति सङ्केतपदेन व्यावर्तनात् अस्याश्चेष्टा अरतिसन्तापजृम्भांगाकृष्टिकपटरुदितस्वावस्थाकथनादयः। मुग्धोत्का यथा—

यन्नाद्यापि समागतः पतिरिति प्रायः प्रपेदे परा-
मित्थं चेतसि चिन्तयत्यपि सखीं न व्रीडया पृच्छति॥
दीर्घं निश्वसितं दधाति चकितं न प्रेक्षते केवलं
किञ्चित्पक्वपलाण्डुपाण्डुररुचिं धत्ते कपोलस्थलीम्॥ ५९॥

---

उत्कां लक्षयति। संकेतस्थलमिति संकेतपदव्यावर्त्यमाह अवधीति लक्षणज्ञानायाह अस्याश्चेष्टेति अरतिर्विषयद्वेषः। अंगाकृष्टिरंगमोटनम्। कपटं लज्जादिना क्रियाविषयकं व्याजं तेनरुदितस्यावस्थाकथनं कालकृतवृत्तांतविशेषकथनम्। तत्रमुग्धामुत्कामुदाहरति। यन्नाद्यापीति काचित्कांचित्प्रत्याह प्रियः प्रियपदेन तदनागमनजन्यदुःखातिशयौचित्यं व्यज्यते अद्यापि एतावत्कालपर्यन्तं प्रतीक्षितोपि न समागतो नागत इति कारणात् प्रायो बाहुल्येन परामन्याम् प्रपेदे प्राप्तः इदं च पदं प्रियतमे एतादृगनुचिताचरणकारित्वं अन्यव्यासंगशून्यत्वं च व्यंजयति। संपदं भावनया तदग्रत एव तिष्ठतीति ध्वनयति परपदमीर्ष्यावत्त्वं गमयति। इत्थममुना प्रकारेण एवं च प्रकारांतरेणापि विचारः सूच्यते। चेतसि मनसि एवं चिंतयंत्यपि विचारयंत्यपि सखीं वयस्यां व्रीडया लज्जया न पृच्छति। सखीपदं प्रश्नार्हतां द्योतयति तद्वत्त्वेपि प्रश्नाकरणेन लज्जायामतिशयो व्यज्यते। किंच दीर्घमायतं श्वसितं न दधाति सखीज्ञानभियेतिभावः। किंच चकितमीक्षते न भीतिचंचलं न प्रेक्षते पूर्ववदेवेति भावः। यद्वा विचारप्रवणतया कथं तर्हि वर्तत इत्याह केवलमेकम् किंचित्पक्वपलांडुपांडुररुचिम् किंचिन्मनाक् पक्वः परिणतो यः पलांडुः कंदविशेषस्तद्वत्पांडुरा हरिणा रुचिः कांतिर्यस्यास्ताम् कपोलस्थलीम् गंडतटीम् धत्ते बिभर्ति विरहवशादिति भावः। पक्वपदेन शोभातिशयो द्योत्यते वस्तुतस्तु पक्वपाण्डुरपदयोरन्यतरदनर्थकमाभाति। अत्र संशयालंकारः। शार्दूलविक्रीडितं वृत्तम्॥ ५९॥

मध्योत्का यथा—

आनेतुं न गता किमु प्रियसखी भीतो भुजङ्गात्किमु
क्रुद्धो वा प्रतिषेधवाचि किमसौ प्राणेश्वरो वर्तते ॥
इत्थं कर्णसुवर्णकेतकरजःपातोपघातच्छला-
दक्ष्णोः कापि नवोढनीरजमुखी बाष्पोदकं मुञ्चति ॥ ६० ॥

---

मध्यामुत्कामुदाहरति। आनेतुमिति। काचित्कांचित्प्रत्याह प्रियसखी प्रिया चासौ सखी च प्रेषितेति भावः। एवं चाऽऽनयनप्रयत्नवत्त्वं द्योत्यते आनेतुम् अर्थात्प्रियम्। किमु न गतेति काक्वा गतैवेत्यर्थः यत्तु ना गतेति यथाश्रुतमेव व्याचख्युस्तन्न प्रियपदासंगतेः। ननु मार्गप्रतिबन्धकवशादेव नागतो भविष्यतीत्यत आह भीतो भुजङ्गात्किमिति भुजंगात् सर्पात् किमु भीत इति काक्वा न भीत इत्यर्थः। तथाविधपौरुषशालिनो न भुजंगभीतिरितिभावः। यत्तु भुजङ्गाद्वेश्यापतेरिति व्याख्यानं तत्स्वीयात्वहान्यापत्त्याऽपव्याख्यानम्। ननु कोपोक्तिवशादेव नागत इत्यत आह क्रुद्धः किंप्रतिषेधवाचि इति प्रतिषेधवचने कुपितः किमिति काक्वा न कुपित इत्यर्थः। एव च रसाभिज्ञस्य मध्यासक्तिविशेषवतस्तस्य निषेधवाङ्मात्रेण न कोप इति भावः। ननु किमर्थमागंतव्यमित्यत आह असौ प्रियतमः प्राणेश्वरः प्राणस्वामी किमनुवर्तते नास्तीति काक्वा प्राणेश्वरोस्त्येवेत्यर्थः। विप्रकृष्टेप्यसाविति निर्देशेन प्राक्तनात्यंतयोगो द्योत्यते। प्राणेश्वरपदेनावश्यकप्राणदुःखनिवारकत्वमावेद्यते। सेवकदुःखं स्वामिनैव निवार्यत इति लौकिकं। वर्तते इति लटा इदानीमपि प्राणपीडापरिहारकारिमतिमत्वं ध्वन्यते। यद्वा किं प्रतिषेधवाचि कुत्सितनिषेधवचने असौ प्राणेश्वरः किं क्रुद्धो वर्तते इति काक्वा न वर्तत इत्यर्थः। प्राणेश्वरपदेन प्राणापराध एव कुपितत्वं युक्तं ननूदासीनसमाचीनवचसीति व्यज्यते असावित्यनेनानन्यसाधारणविवेकित्वं व्यज्यते एवं चानागमनहेत्वभावेप्यनागमने चिन्तातिशयं व्यञ्जयति। इत्थममुना प्रकारेण चिंतयंतीति शेषः। कापि अनिर्वचनीयगुणा नवोढा नीरजमुखी ऊढं धृतं यत् नीरजं कमलं तद्वन्मुखं यस्याः नवा तरुणी चासावूढनीरजमुखी चेति विग्रहः। ऊढपदेन स्थानभ्रष्टत्वं तेन चाक्लिष्टत्वं द्योत्यते नीरजपदं सुकुमारतामापेदयति यत्तु नवोढाचासौ नीरजमुखी चेति विग्रह इति तन्न मध्यात्वानुपपत्तेः। यच्च नवोढं तरुणं यन्नीरजमिति व्याख्यानं तन्न चिंताक्लिष्टेन मुखेन तरुणकमलसाम्यानुपपत्त्योढपदानर्थक्यतया

प्रौढोत्का यथा—

भ्रातर्निकुञ्ज सखि यूथि रसाल बन्धो
मातस्तमस्विनि पितस्तिमिर प्रसीद ॥
पृच्छामि किंचिदिति नीरधराभिरामो
दामोदरः कथय किं न समाजगाम ॥ ६१ ॥

---

चापव्याख्यानमेव । वस्तुतस्तु नवोढं तत्कालाहृतमित्यर्थः । एवं चाश्रुबाहुल्यं व्यज्यते अक्ष्णोर्नेत्रयोः । कर्णसुवर्णकेतकरजः पातोपघातच्छलात् कर्णयोःश्रोत्रयोः शोभनवर्णकेतकपुष्पयोरवतंसीकृतयोर्यद्रजस्तस्य यः पातः पतनं तेनोपघातः पीडा तन्मिषात् रजःपदं सूक्ष्मतां सा च शीघ्रनिःसारणयोग्यतां ध्वनयति । पातपदमबुद्धिपूर्वकतां गमयति । बाष्पोदकं मुंचति लटाविरहितत्वं ध्वन्यते एवं च छलेन दुःखजाश्रुगोपनेन लज्जावत्त्वं सखीप्रेषणादिना च मदनवत्वं तेन च मध्यात्वं व्यज्यते । प्रेषितसखीपरावृत्तेः । प्रागर्वाचितावत्वादुत्कात्वमवगम्यते अत्रापन्हुतिरलंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ ६० ॥

प्रौढामुत्कामुदाहरति । भ्रातर्निकुंजेति। भो भ्रातः निकुंज। भ्रातृत्वं च सर्वमनीषितसंपादकत्वादिति भावः । तथा भो सखियूथि पुष्पलते सखीत्वं चोद्दीपनविभावतया प्रियतमस्य स्वस्मिन्नासक्तिविशेषविधायकत्वादिति भावः । तथा च भो रसालबंधो सुहृदाम्र 'आम्रश्चूतोरसालोसौ' इत्यमरः । सुहृत्त्वं च दोलाद्युत्साहितसहनादिति भावः । तथा मातस्तमस्विनि जननीरूपे रजनि विभावरि 'तमस्विन्यौ रजनी यामिनी तमी' इत्यमरः । मातृत्वं चैवंविधबहुकार्यगोपकत्वादिति भावः । तथा पितस्तिमिर जनकरूपांधकार पितृत्वं च रजनीसंयोगित्वात् क्रियमाणमदपराधगोपनसाहाय्यसंपादकत्वाच्च यत्सनाथतया रजन्यप्येतादृशी कार्यगोपनसमर्थेति भावः । अत्र भ्रातादिशब्दाः सम्बन्धिकायां स्वपराः । प्रसीदेति प्रत्येकमन्वेति । तावता किमित्यत आह नीरधराभिरामः सजलजलदकान्तिमनोहारी दामोदरः कृष्णः नीरधराभिराम इत्यनेन रजन्यामन्यजनापरिचियत्वं तेन चागमनसौकर्यं व्यज्यते । दामोदरपदं बन्धनं तच्च व्यसनशालित्वं गमयति । एवं चात्र वने भवन्त एव तत्रापि च मत्संबंधिन इति प्रश्नकरणकथनतोभयौचित्यं व्यज्यते । वसंततिलका वृत्तम् ॥ ६१ ॥

परकीयोत्का यथा—

स्नातं वारिदवारिभिर्विरचितो वासो घने कानने
शीतैश्चन्दनबिन्दुभिर्मनसिजो देवः समाराधितः ॥
नीता जागरणव्रतेन रजनी व्रीडा कृता दक्षिणा
तप्तं किं न तपस्तथापि स कथं नाद्यापि नेत्रातिथिः ॥ ६२ ॥

---

परकीयामुत्कामुदाहरति। स्नातमिति। कापि सखीं वक्ति हे सखीति संबुद्धिरध्याहर्तव्या तदनुपादानं तदनुसंधानराहित्यं तच्चौत्कंठ्यातिशयं पक्षे विरक्ततामावेदयति। वारिदवारिभिः ।ः एवं च पंकिलेपि मार्गे गमनेन क्लेशातिशयः पक्षे चात्यंतं तपस्विता ध्वन्यते। स्नातं एवं वर्षासाधनं संपादितमिति द्योत्यते। किंच घने निविडे कानने वने। 'काननं वनमि'त्यमरः। वासो वसतिः विरचितः कृतः धनपदं जनसंचारायोग्यतां सा च भयशालितां पक्षे वैराग्य-वत्तां व्यंजयति। किंच शीतैरतिशीतलैरित्यर्थः चंदनविंदुभिः श्रीखंडद्रवपृषतैः मनसिजो मदनः पक्षे मनः मनःकल्पनाविषयो देव आराध्य इति यावत् समाराधितो विधिना सेवितः। कौमुद्यां कस्यापि दृग्विषयतामाभवत्विति धिया वर्षास्वपि शीतलचंदनानुलेपनमिति शरीरेप्या-सक्त्यभावो द्योत्यते तेन च प्रेमातिशयो व्यज्यते व्यथकत्वेन व्रतत्वं पुष्पैश्चन्दनविंदुभिरिति पाठेपि शैत्यं शीतलत्वं ध्वन्यते। किंच रजनी रात्रिः जागरणव्रतेन निद्रां न करिष्यामीति संकल्पेन नीता व्यतिक्रांता किंच व्रीडा लज्जा पियतमप्राप्तिप्रतिबंधकीभूतेति भावः। पक्षे ईषणात्यागादिति भावः दाक्षिणाकृता संकल्पपुरःसरं त्यक्तेत्यर्थः। दक्षिणापदं पुनरनुपादेयतां सा चातिशयितासक्तिं व्यनक्ति इत्थं किं न तपस्तप्यते शरीरमनेनेति तपःक्लेशजातं तप्तकृत-मपि तु सर्वमपीत्यर्थः तथाप्येवं कृतेपि क प्रियतमः अद्यापि यामिनीचरमसमयावध्यपि नेत्रा-तिथिः नेत्रावेशकः नयनगोचर इति यावत् 'स्युरावेशकआगन्तुरतिथिर्नै' त्यमरः। एवं च यत्र दृग्गोचरतामात्रमपि न तथा तत् कुत्रालिंगनचुंबनादीनीति भावः कथं न किमिति न तथा चानागमनकारणं कथयेति भावः। एवं चैतादृशक्लेशविशेषेणापि न मे दृङ्मात्रगोचर इति मंदभाग्यताभिव्यज्यते अन्योपि स्नानादिपूर्वकं सकामो देवतामाराधयतीति लौकिकस्नान-वननिवाससांकल्पिकदेवतापूजनरजनीजागरणदक्षिणांतव्रतविधाने कृतेपि स सकलजगत्कर्तृ-त्वेन प्रसिद्धः परमात्मा क्षणमपि न नयनगोचरो जायते तत्कथय केनोपायेन भावीति. गुप्तपर-

सामान्यवनितोत्का यथा—

कथं न कांतः समुपैति कुञ्जमित्थं चिरं चेतसि चिन्तयन्ती।
अस्त्रावयन्निष्पतदश्रुधारा वाराङ्गना कापि धनाभिलाषात् ॥ ६३ ॥

अद्य मे प्रियवासक इति निश्चित्य या सुरतसामग्रीं सज्जीकरोति सा वासकसज्जा वासको वारः अस्याश्चेष्टा मनोरथसखी परिहासदूतीप्रश्नसामग्रीसम्पादनमार्गविलोकनादयः ॥ मुग्धा वासकसज्जा यथा—

---

ख्याभिलाषवत्तया परकीयात्यमुत्कात्वमत्यंतं स्फुटम्। शार्दूलविक्रीडितं वृत्तम् ॥ ६२ ॥

वेश्यामुत्कामुदाहरति। कथमिति। कश्चन कंचन वदति कांतः कामनाविषयः। धनदायित्वादिति भावः कुंजं संकेतितमिति भावः। कथं किं निमित्तं न समुपैति नागच्छति इत्थममुना प्रकारेण चेतसि चिरं चिरकालं चिंतयंती विचारयंती धनाभिलाषात् निष्पतदश्रुधाराः निष्पतंति यान्यश्रूणि तेषां या धारास्ताः। प्रास्त्रावयत्पातयामास बहुतरं रुरोदेति भावः। प्राक्षालायदित्यपि पाठः। इतरत्स्पष्टं। उपजातिवृत्तम् ॥ ६३ ॥

वासकसज्जां लक्षयति। अद्येत्यादि। प्रियवासक इति प्रियागमनवासर इत्यर्थः 'वारः सूर्यादिदिवस' इति विश्वः। वारपदं निश्चयोत्तरकालोपलक्षकम् यत्तु वासकोवर इति नाम्नि वासकशब्दं व्याचष्टे इत्याह तदभिधानादर्शनादनुपादेयैम्। प्रियागमननिर्णयोत्तरसमयसुरतसामग्रीसंपादनानिपुणत्वं वासकसज्जात्वमित्यर्थः। अत एव मुदावासकसज्जास्वमण्डयन्नत्यपि प्राञ्चः तस्याश्चेष्टामाह मनोरथेत्यादि मनोरथो मानसनानाकल्पनाजातमित्यर्थः। तत्र मुग्धावासकसज्जामुदाहरति। हारमिति। काचित्कांचित्प्रत्याह तारकातिरुचिरं तारकावदतिरुचिरं अत्युज्ज्वलं हारं मुक्तावलिं 'हारो मुक्तावलिः' इति विश्वः। गुंफति संदर्भयति मुक्ताप्रकरं हारत्वेन करोतीत्यर्थः। कांचीलतां मेखलालतेव तां ग्रथ्नाति सन्निवेशविशेषापन्नां करोति किंच दीपं न्यस्यति किंतु एकं तत्र दीपभाजने बहुलं स्नेहं बहुलतैलं न धत्ते न ददाति भाविनिप्रकाशे प्रियकरग्रहणादिलज्जयेति भावः। पुनः किंचेत्यर्थः। वासकस्य उष्यतेस्मिन्निति वासः वास एवेति वासकः प्रासाद इत्यर्थ. । उक्तं च वृहत्कथायां 'सा कन्या जामात्रैव कान्तिश्चर्पितवासके' ति। 'प्रविष्टा वासके सद्यस्तथैव सममन्वभूत्। मर्त्योपि दिव्य संभोगमि'ति च।

हारं गुम्फति तारकातिरुचिरं ग्रथ्नाति काञ्चीलतां
दीपं न्यस्यति किंतु तत्र बहुलं स्नेहं न धत्ते पुनः ॥
आलीनामिति वासकस्य रजनौ कामानुरूपां क्रियां
साचिस्मेरमुखी नवोढसुमुखी दूरात्समुद्वीक्षते ॥ ६४ ॥

मध्या वासकसज्जा यथा—

तस्य आलीनां तत्संम्बंधिसखीनां निगूढमिति शेषः कामानुरूपां मदनानुरूपां इच्छानुरूपां वा क्रियां सामग्रीसंपादनाम्। रजनौ रात्रौ कस्याप्यन्यस्य ज्ञानं माभवत्विति धियेति भावः। वस्तुतः प्रियागमननिश्चयोत्तरकालोपलक्षकं रजनीपदं कुर्वती एवं च सार्वकालिककेलिप्रासाद स्थसखीसमूहं प्रत्यपि सुरतसामग्रीगोपनकारितयातिशयितलज्जावत्त्वं ध्वन्यते। यत्तु वासकस्य वारस्य जन्यामित्यन्वय इति तत्र तथाभिधाने वासकेत्यस्यानर्थकत्वापत्तेः साचिस्मेरमुखी साचि तिर्यक् अन्य लज्जयेति भावः। स्मेरं सहासम् प्रियागमनादिति भावः मुखं वदनं यस्याः नवोढसुमुखी मुग्धांगना दूरात्समुद्वीक्षते विलोकयति अर्थात्प्रियपद्धतिमित्यर्थः। इतरत्स्पष्टम् वस्तुतस्तु वासकस्य रजन्यौ उष्यतेस्मिन्प्रियेण सहेति वासः वास एव वासकः प्रियसंनिधान-दिनम् तत्संबंधिरात्रौ। कामानुरूपां स्वाभिप्रायानुरूपामिति काचिद्धारं गुम्फति इत्यादिरूपां आलीनां सखीनां कर्तव्यतां साचिस्मेरमुखी कथं एता अतिधूर्ता मदन्तर्गतमप्यकुर्वन्निति धिये-तिभावः। नवोढा सुमुखी दूरात्सखीविरहाद्धियेति भावः। समुद्वीक्ष्यते सम्यक्पश्यतीत्यर्थः। एवं च प्राचां वासकसज्जिकामुपगते भानाविति मुरारि चतुर्थांकभिहितमपि साधु। शार्दूल-विक्रीडितं वृत्तम् ॥ ६४ ॥

मध्यां वासकसज्जामुदाहरति। शिल्पमिति। काचित्कांचित्प्रत्याह कुतुकात् मिथ्याकुतूहलात 'कुतुकं तु. कुतूहल'मित्यमरः निरपेक्षग्रेति भावः। शिल्पं कलाकौशलम् 'शिल्पं कर्म कलादिकमि'त्यमरः। दर्शयितुं प्रकटयितुम् अन्यापेक्षयेति भावः। कल्हारहारस्रजम् कल्हा-राणां सौगंधिकानां हारवत् मुक्तावलीवत् स्रक् माला हारपदम् गुच्छादिवैचित्र्यद्योतनार्थम्। करोति किंच चित्रप्रेक्षणकैतवेन चित्रस्य अर्थात् द्वारस्थस्य प्रेक्षणमवलोकनम् तस्य कैतवेन

पाठान्त०—१ परिह.सधियेतिभावः।

शिल्पं दर्शयितुं करोति कुतुकात्कल्हारहारस्रजं
चित्रप्रेक्षणकैतवेन किमपि द्वारं समुद्वीक्षते ॥
गृह्णात्याभरणं नवं सहचरीभूषाजिगीषामिषा-
दित्थं पद्मदृशः प्रतीत्य चरितं स्मेराननो भूत्स्मरः ॥ ६९ ॥

प्रगल्भा वासकसज्जा यथा—

कृतं वपुषि भूषणं चिकुरधोरणी धूपिता
कृता शयनसन्निधौ क्रमुकवीटिकासंभृतिः ॥

---

कपटेन चित्रपदं विलोकनीयतां द्योतयति किमपि ईषत्तिर्यगिति यावत् लज्जयेति भावः। द्वारं देहलीं समुद्वीक्षते विलोकयति प्रियागमनजिज्ञासयेति भावः। किंच सहचरीभूषाविजिगीषामिषात् सहचारीणां सखीनां यानि भूषणानि तेषां जिगीषा जेतुमिच्छा तस्याः मिषात् भवद्भूषणादधीकं कान्तिभाजि मद्भूषणानीति कपटेनेति भावः नवं नूतनमाभरणम् एकत्वमविवक्षितम् गृह्णाति इत्थं पूर्वोक्तप्रकारेण पद्मदृशः कमलनयनायाः चरितमाचरणम् प्रतीत्य ज्ञात्वा प्रतीत्येति पदं चेतोभवस्याप्यदृश्यतामावेदयत्रत्यन्तनिगूढत्वं चेष्टितस्य द्योतयति। स्मरो मदनः स्मेराननो विकसिताननः प्राप्तोयं मत्प्रभुतासमय इति भावः। एवं चाधिकमदनबाधावत्त्वं व्यज्यते यद्वा स्मेरं सहासं आननं यस्य कथमियं सखीसमूहमपि प्रतारयतीति विस्मयेनेति भावः। अभूज्जातः। एवं च कैतवादिपदं लज्जावत्वं स्मेराननादिपदं समदत्त्वं ध्वनयति। तच्च मध्यात्वम्। शार्दूलविक्रीडितं वृत्तम् ॥ ६५ ॥

प्रगल्भां वासकसज्जामुदाहरति। कृतमिति। काचित्कांचित्प्रत्याह वपुषि शरीरे भूषणमलंकरणम् कृतं संपादितम्। किंच चिकुरधोरणी चिकुरा वालाः 'चिकुरः कुन्तलो वाल' इत्यमरः। तेषां धोरणी संघातविशेषः धूपिताऽधिवासिता। किंच शयनसन्निधौ पर्यंकनिकटे क्रमुकवीटिकासंभृतिः क्रमुकानि पूगशकलानि वीटिकाश्च यास्तयोः संभृतिः संभारः कृतः संपादितः एणीदृशा हरिणनेत्रया एवं च मार्गप्रेक्षणत्वं द्योत्यते हरिणीदृशेति प्रागप्यन्वेति। भवनम् एत्यागत्य एवं च प्रियपद्धतिदर्शनाय पुनर्बहिर्गमनमावेद्यते देहत्विषा शरीरकान्त्या करणभूतया स्फुरत्कनककेतकीकुसुमकान्तिभिः स्फुरत्कनककेतकीकुसुमानां स्वतो न शोभाशालित्वमिति द्योत्यते याः कनक-

अकारि हरिणीदृशा भवनमेत्य देहत्विषा
स्फुरत्कनककेतकीकुसुमकान्तिभिर्दुर्दिनम् ॥ ६६ ॥

मनोरथश्च यथा—

आवयोरङ्गयोर्द्वैते भूयो विरहविप्लवः ॥
अद्वैते च स्मितं स्फीतं न स्यादन्योन्यवीक्षणम् ॥ ६७ ॥

परकीया वासकसज्जा यथा—

---

केतकीनां पुष्पदीप्तयः ताभिर्दिनं दिवसरूपं समयं दुर्निषिद्धं तिरस्कृतमिति यावत् 'दुःस्यात्कष्ट-निषेधयोः' इति विश्वः। अकारि कृतम् एवं च प्रकाशरूपस्यापि दिवसस्य देहसंबन्धिकनककेतकीकुसुममालादीप्तिभिस्तिरस्कारकारितयाऽतिशयितकांतिवत्तया ध्वन्यते। यद्वा कृतमित्यादिषु णिजर्थेलक्षणीभवनम् एत्य देहशोभाशोभिकनककेतकीपुष्पमालादीप्तिभिर्दुर्दिनं कष्टदिनम् अकारि कष्टत्वं चातिवाहितुमशक्यतया अथवा देहत्विषा कनककेतकीकुसुमकान्तिभिः। अर्थात्सुरतसामग्रीत्वेन संपादितकेतकीकुसुमदीप्तिभिः दुर्दिनं मेघच्छन्नदिनं स्फुरत्सप्रकाशम् अकारि एवं प्रियस्यागमनसौकर्यायेतिभावः। एवं कनककेतकीकुसुमदीप्तानां प्रकाशकतया दुर्दिनत्वसंपादकत्वमसंभवीति दूषणमपास्तम्। पृथ्वी वृत्तम् ॥ ६६ ॥

चेष्टामनूक्तं मनोरथमुदाहरति आवयोरिति। कापि सत्वरच्छंदक्रीडाभिलाषिणी वक्ति आवयोर्मम प्रियस्य अस्मदो 'युवावौद्विवचने' इत्यावादेशः। अंगयोः शरीरयोर्द्वैते द्वयोर्भावः द्विधा द्वितैव द्वैतम् द्वैविध्यमित्यर्थः। तस्मिन्सति भूयः पुनरपि विरहविप्लवः विरहेण प्रियवियोगेन विप्लवः दुःखं भावीति शेषः। अस्तु तर्हि प्रियैक्यमेवात आह अद्वैते प्रियेण सहाभेदे स्फीतम् अतिशयशालिपरस्परप्रसादेनेति भावः। स्मितं हसितं च इत्यपरम् अन्योन्यवीक्षणम् साकूतपरस्परावलोकनम् न स्यान्न भवेत्। एवंविधाभिलाषस्य स्वच्छन्दप्रवृत्तत्वेन मनोरथत्वं सर्वत्र चेष्टायाः पृथगनुदाहरणादत्रैव तदुदाहरणमयुक्तमिति प्रतिभाति अथवा मनोरथैकनायकं प्रतीयमुक्तिः। पथ्यावक्त्रंवृत्तम् ॥ ६७ ॥

परकीयां वासकसज्जामुदाहरति ॥ श्वश्रूमिति ॥ काचित्कांचित्प्रत्याह श्वश्रूं पतिजननीम् छलेन अतिप्रभाते जामातृसदने महोत्सवविलोकनाय गंतव्यमस्तीत्यादिकपटेन स्वापयति निद्रापयति बहुलप्रकाशकतया संतापकतया च नायाति भवतीनां निद्रेत्यादिकपटेन प्रदीपांकुरं दीपप्ररोहम् अंकुरपदं सूक्ष्मतां साचाल्पप्रकाशतां व्यंजयति तिरोधत्ते। भित्त्याद्यन्तारितत्वे-

श्वश्रूं स्वापयतिच्छलेन च तिरोधत्ते प्रदीपांकुरं
धत्ते सौधकपोतपोतनिनदैः सांकेतिकं चेष्टितम् ॥
शश्वत्पार्श्वनिवर्तिताङ्गलतिकं लोलत्कपोलद्युति
क्वापि क्वापि कराम्बुजं प्रियधिया तल्पांतिके न्यस्यति ॥ ६८ ॥

सामान्यवनिता वासकसज्जा यथा—

चोलं नीलनिचोलकर्षणविधौ चूडामणिं चुम्बने
याचिष्ये कुचयोः करार्पणविधौ काञ्चीं पुनः कांचनीम् ॥
इत्थं चन्दनचर्चितैर्मृगमदैरंगानि संस्कुर्वती
तत्किं यन्न मनोरथं वितनुते वारेषु वाराङ्गना ॥ ६९ ॥

---

नाच्छद्यतां व्यञ्जयति एवं च प्रियागमसौकर्यातिशयो ध्वन्यते किं च सौधकपोतपोतनिनदैः प्रासादकलशशब्दैः सांकेतिकं संकेतसम्बधि चेष्टितम् एवं च सौधसंबंधोत्कीर्तनेन नैकट्यं तेन चान्यथा नाशंकनीयत्वं व्यज्यते पोतपदेन वारंवारं शब्दकरणौचित्यम् अहमत्रास्मीति ज्ञापकमित्यर्थं शब्दं व्यापारम् एकवचनमेकरूपतां द्योतयति धत्तेऽङ्गीकरोति एवं च कपोतनिनदएवायं नान्यदित्यप्रकटपरपुरुषानुरागो व्यज्यते किंच शश्वत्पार्श्वविवर्तितांगलतिकम् शश्वन्निरंतरम् पार्श्वाभ्यां विवर्तिता परावर्तिता तल्पे भयप्रांतावलोकनार्थमिति भावः । अंगलतिका गात्रयष्टिर्यत्र क्रियायाम् । तथालोलत्कपोलद्युति लोलंती चंचला परिवर्जनैरिति भावः कपोलद्युतिर्गंडप्रभा यत्र क्रियायाम् तथा प्रियागमनसंभावनासंतोषेणमुखस्यातिप्रसन्नतयेति भावः तल्पांतिके शयनप्रांते क्वापि क्वापि प्रदेशे प्रियधिया जारागमसंभावनासंतोषेण मुखस्यातिप्रसन्नतयेति भावः जारागमनसंभावनया करांबुजं करकमलम् अम्बुजपदं प्रियस्मृतिजन्यखेदवत्तां ध्वनयति । शार्दूलविक्रीडितंवृत्तम् ॥ ६८ ॥

सामान्यवनितां वासकसज्जामुदाहरति । चोलमिति । काचित्कांचित्प्रत्याह ॥ नीलचोलकर्षणविधौ नीलवर्णो योनिचोलः उपरितनशाटकः ' निचोलप्रच्छदपटः ' इत्यमरः । तस्य कर्षणविधौ आकर्षणविधौ चोलम् 'चोलः कूर्पासको स्त्रियामि'त्यमरः कुचयोः स्तनयोः याचिष्ये प्रार्थयिष्यामि इदमग्रेप्यन्वेति नीलपदं घनांधकारगमनयोग्यतां ध्वनयति गौरांगित्वं वा विधिपदमाकर्षणेवश्यकर्तव्यत्वं द्योतयति किंच चुंबने चुंबनसमये चूडामणिं केशपाशभूषारत्नं न किंचेत्यर्थः

सदाकृताज्ञाकरप्रियतमास्वाधीनपतिका निरन्तराज्ञाकरप्रियत्वमित्यर्थः । अस्याश्चेष्टाः ॥ वनविहारादिमदनमहोत्सवमदाहङ्कारमनोरथावाप्तिप्रभृतयः मदो हर्षोत्कर्षः ।

मुग्धा स्वाधीनपतिका यथा—

मध्ये न कृशिमा स्तने न गरिमा देहे न वा कान्तिमा
श्रोणौ न प्रथिमा गतौ न जडिमा नेत्रे न वा वक्रिमा ॥
लास्ये न द्रढिमा न वाचि पटिमा हास्ये न वा स्फीतिमा
प्राणेशस्य तथापि मज्जति मनो मय्येव किं कारणम् ॥ ७० ॥

---

कुचयोः स्तनयोः करार्पणविधौ करार्पणसमये काञ्चनीं सुवर्णनिर्मितां काञ्चीं मेखलाम् अर्पणपदं मर्दनावसरे अन्याद्भुतवस्तुयाञ्चेच्छावत्त्वं ध्वनयति पूर्वं विधिपदोपादानादत्रापि तस्यैवोपादानमयुक्तमिवाभाति इत्थं पूर्वोक्तमनया चन्दनचर्चितैर्मृगमदैः कस्तूरिकाभिः 'मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम्' इत्यमरः । अङ्गानि अवयवान् 'अङ्गं प्रतीकावयवः' इत्यमरः । संस्कुर्वती अधिवासयन्ती वासयन्ती वाराङ्गना वेश्यावारेषु कान्तागमननिश्चयोत्तरसमयेषु यद्वस्तु मनोरथाभिलाषविषयम् यद्वा मनोरथमभिलाषं वा यत् यदर्थमित्यर्थः । तत् वितनुते करोति यत्तत्किं न किमपीत्यर्थः एवं च वेश्याभिलाषविषयं सर्वमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ६९ ॥

क्रमप्राप्तां स्वाधीनपतिकां लक्षयति । सदेति । निरन्तराज्ञाकरप्रियत्वमित्यर्थः । लक्षणज्ञानाय चेष्टामाह वनेति । मदो हर्षोत्कर्षः अहंकार आत्मनीतराधीनकत्वधीः मुग्धां स्वाधीनपतिकामुदाहरति । मध्येति । कापि सखीमाह । हे सखि मध्ये कटौ कृशिमां कृशत्वम् नववयःसंधिमत्तया आपचयोपचयाभावान्न कृशत्वं स्फुटमिति भावः । किंच स्तने कुचे गरिमा गुरुत्वेन पूर्वाभिप्रायः देहे शरीरे कान्तिमा लावण्यातिशयः संसर्गतारुण्याभावात् किंच श्रोणौ नितम्बे प्रथिमा पृथुत्वं न किंच गतौ गमने जडिमा जडत्वं न किंच नेत्रे नयने वक्रिमा तिर्यगवलोकनं न । ननु संपूर्णतारुण्याभावेपि कलाकौशलत्वादेवासक्तिरत आह 'लास्यं तौर्यत्रिकं नाट्यम्' इति विश्वः । द्रढिमा दृढत्वं अभ्यासविशेष इति यावत् । यद्वा विलासे द्रढिमा

मध्या स्वाधीनपतिका यथा—

यदपि रतिमहोत्सवे नकारो
यदपि करेण च नीविधारणानि ॥
प्रियसखि पतिरेष पार्श्वदेशं
तदपि न मुञ्चति तत् किमाचरामि ॥ ७१ ॥

प्रौढा स्वाधीनपतिका यथा—

वक्रस्याधरपल्लवस्य वचसो हास्यस्य लास्यस्य वा
धन्यानामरविन्दसुन्दरदृशां कान्तस्तनोति स्तुतिम् ।
स्वप्नेनापि न गच्छति श्रुतिपथं चेतःपथं दृक्पथं
काप्यन्या दयितस्य मे सखि कथं तस्यास्तु भेदग्रहः ॥ ७२ ॥

---

चमत्कारविशेषो न किंच वाचि वचने पटिमा पटुत्वम् इष्टत्वादिकमिति यावत् । किंच हास्ये हसिते स्फीतिमा प्रागल्भ्यम् ॥ मुग्धत्वादिति भावः । यद्यपि तथापि प्राणेशस्य प्रियतमस्य मय्येव नान्यत्र मनश्चित्तं मज्जति लीनं भवति । एवं च बहिर्गमनाभावो द्योत्यते अत्र किंकारणं तन्न जाने एवं चाहंकारो द्योत्यते । शार्दूलविक्रीडितं वृत्तम् ॥ ७० ॥

मध्यां स्वाधीनपतिकामुदाहरति । यदपीति । हे प्रियसखि यदपि यद्यपि रतिमहोत्सवे संभोगोत्कटोत्सवसमये नकारो निषेधः क्रियते । उत्सवपदं निषेधायोग्यतां ध्वनयति । यदपि करेण हस्तेन नीविधारणानि वस्त्रग्रन्थ्यवष्टम्भाः बहुवचनं बलादप्यनिवार्यतां द्योतयति । क्रियन्ते तदपि तथापि एषः पतिः प्रियः पार्श्वदेशम् अङ्गलग्नतां चेद्यदि न मुञ्चति तर्हि किं करोमि तत्कथयेति भावः । एवं चाहंकारो द्योत्यते मध्यात्वं च स्फुटमेव । पुष्पिताग्रावृत्तम् ॥ ७१ ॥

प्रौढां स्वाधीनपतिकामुदाहरति । वक्रस्येति । काचित्कथमन्यनायिकाकान्तस्तदीयस्तवं विदधाति न त्वदीयः प्रियस्तव स्तवं करोतीति वादिनीं सखीं प्रत्याह । हे सखि कान्तः अर्थात् अन्याङ्गनानामपि प्रियः । वक्रस्य वदनस्य अधरपल्लवस्य अधरोष्ठकिसलयस्य । पल्लवपदं कोमलतामरुणतां च व्यञ्जयति वचसो वचनस्य हास्यस्य हसितस्य लास्यस्य

परकीया स्वाधीनपतिका यथा—

स्वीयाः सन्ति गृहे गृहे मृगदृशो यासां विलासक्कण-
त्काञ्चीकुण्डलहेमकङ्कणझणत्कारो न विश्राम्यति।
को हेतुः सखि कानने पुरपथे सौधे सखीसन्निधौ
भ्राम्यन्ती मम वल्लभस्य परितो दृष्टिर्न मां मुञ्चति ॥ ७३ ॥

---

तौर्यत्रिकस्य विलासस्य वा विकल्पार्थः। समुच्चयार्थो वा शब्दः धन्यानां प्रियेण स्वतः स्तुतिकरणादिति भावः। अरविन्दसुन्दरदृशां कमलाभिरामनयनानां स्तुतिं स्तवं तनोति विस्तारयति एवं विरहसद्भावोपि द्योत्यते ॥ मम प्रियस्य दयितस्य काप्यन्या कामिनी स्वप्नेनापि स्वप्नावस्थायां किमुत जाग्रद्दशायामिति भावः। दृक्पथं दृष्टिपथं श्रुतिपथं श्रवणमार्गम् चेतःपथमन्तःकरणपद्धतिम् न गच्छति न प्राप्नोति दृगादिविषया न भवतीत्यर्थः। तस्मात्तस्य मत्प्रियस्य भेदग्रहः अर्थादितरनायकेभ्यो भिन्ना बुद्धिः एतस्यापि स्तुतौ भेदत्वात् कथमस्तु न कथमपीत्यर्थः। स्तुतेः सप्रतियोगितयान्यकामिनि दर्शनादिकमपेक्षितं तदभावाच्च कथं स्तुतिः स्यादिति भावः। एवं चान्याङ्गनापतीनामन्याङ्गनादर्शनादिसत्त्वात् स्तुतिसंभवात् तास्वधन्यात्वं स्वस्मिंश्च धन्यतमात्वं व्यज्यते यद्वा कापि प्रियतमे कोपादिकं विधेयमित्युपदेशकारिणी सखीं प्रति वक्ति। हे सखि यासामरविन्दसुन्दरदृशां वक्रादीनां कान्तः स्तुतिं तनोति तास्तु धन्याः। मे दयितस्य अन्या कापि स्वप्नेनापि दृगादिविषया न एवं च कोपोत्तरं तेन स्तुत्यादिना प्रसादीकरणं कर्तुं शक्यम्। एवं च तत्संबन्धस्तद्विषयक इति यावत् भेदग्रहः भिद्यते हृदयमनेनेति भेदः कोप इत्यर्थः। तस्य ग्रहो ग्रहणम् अङ्गीकारः कथमस्तु नोचित इति भावः एवं च यः कोपोत्तरं स्तुत्यादिप्रसादनमपि कर्तुं न जानाति तादृशे सरले मन्दे किंचित्तु नोचितं कोपकरणमिति व्यज्यते। अत्र प्रकृतेन स्वप्नावस्थयाप्यन्याङ्गनादर्शनाद्यभावकथने नामकृतजाग्रद्दशायां तदभावः कैमुतिकन्यायेनार्थादापतनीति प्रकृतार्थादप्रकृतार्थापत्तिरलंकारः सा चान्याङ्गनातः स्वीयाधन्यतमात्वोक्त्या व्यतिरेकानुप्राणित 'एकस्य वस्तुनो भावे यत्र वस्त्वन्यदापतेत्। कैमुतिकन्यायतः साम्यादर्थापत्तिरलंक्रिया' इति तल्लक्षणात्। शार्दूलविक्रीडितं वृत्तम् ॥ ७२ ॥

परकीयां स्वाधीनपतिकामुदाहरति। स्वीया इति। कापि सखीं वक्ति हे सखि यद्यपि

स्वाधीनपतिका सामान्यवनिता यथा—

सन्त्येवं प्रतिमन्दिरं युवतवो यासां सुधासागर-
स्रोतःस्यूतसरोजसुन्दरचमत्कारा दृशोर्विभ्रमाः।
चित्रं किन्तु विचित्रमन्मथकलावैशद्यहेतोः पुन-
र्वित्तं चित्तहरं प्रयच्छति युवा मय्येव किं कारणम् ॥ ७४ ॥

---

ताः स्वीयाः यासां विलासक्वणत्काञ्चीकुण्डलहेमकङ्कणझणत्कारः विलासेन हस्तादिचेष्टाविशेषेण क्वणती सशब्दा नीवी कटिमेखला कुण्डलं कर्णभूषणं हेमकङ्कणं सुवर्णबाहुवलयं येषां झणत्कारः शब्दविशेषः न विश्राम्यति विरतिं न याति ताः सरोरुहदृशः कमलनयनाः स्वीयाः स्वगृहे स्वसदने गृहपदमायासाभावमवगमयति सन्ति विद्यन्ते तथापि कानने विपिने एवं च भयजनकेऽपि विपिने भयप्राप्त्या आसक्तिविशेषो ध्वन्यते तथा पुरपथे नगरमार्गे एवं च बहुतरजनाकीर्णतयोचितलज्जापि तत्परित्यागात् आसक्त्यातिशय एव द्योत्यते तथा सौधे उच्चसदने एवं चोच्चतया निम्नप्रदेशाद्यारोहणेन साहसकारिता व्यज्यते। तथा च स एव तथा सखीसन्निधौ सखीसंबंधे एवं च समीपतरवर्तिसखीनिवहसमक्षविलोकनमुचितं वेति विवेकवैधुर्यं ध्वन्यते तेन चोन्मादस्तेन च स एव मां परितः समंताद्भ्राम्यन्तीं भ्रमन्तीं एवं चैकत्रानवस्थितया विश्रान्त्यभावस्तेन च स एव व्यज्यते मम वल्लभस्य प्रियस्य दृष्टिः एकवचनमेकरूपतां व्यनक्ति न मुञ्चति अर्थान्मामित्यर्थः अत्र को हेतुः किं कारणम्। शार्दूलविक्रीडितं वृत्तम् ॥ ७३ ॥

सामान्यवनितां स्वाधीनपतिमुदाहरति। सन्त्येवमिति। सामान्यवनिता सखीं वक्ति हे सखि यासां स्वीयानां परकीयानां वा सुधासागरस्रोतःस्यूतसरोजसुन्दरचमत्काराः सुधायाः अमृतस्य सागरः सरित्पतिः तस्य स्रोतसि प्रवाहे स्यूतं लग्नम्। एवं च पत्न्याह्लादकत्वं व्यज्यते अत्र 'स्रोतोम्बुसरणं स्वत' इत्यमरः। स्वतोम्बुसरणरूपार्थस्य सागरे सम्भवादसमञ्जसमिवाभाति यत्सरोजं कमलं तत्सुन्दराः रमणीयाः चमत्कारा येषां ते एतादृशाः दृशोर्विभ्रमाः दृष्टेः कटाक्षादयः विचित्रमन्मथकलावैशद्यहेतोः विचित्रा नानाविधकेलिकलाः परिस्फुरन्ति किमु वाच्यं तासामङ्गसङ्गे

स्वयमभिसरति प्रियमभिसारयति वा या साभिसारिका । अस्याश्चेष्टा समयानुरूपवेषभूषणशङ्काप्रज्ञानैपुण्यकपटसाहसादय इति । परकीयायाः स्वीयायास्तु प्रकृतएव क्रमः । अलक्ष्यतासम्पादकस्य श्वेताद्याभरणस्य स्वीयाभिसारिकायामसम्भवात् मुग्धाभिसारिका यथा——

दूती विद्युदुपागता सहचरी रात्रिः सह स्थायिनी
दैवज्ञो दिशति स्वनेन जलदः प्रस्थानवेलां शुभाम् ।

इतिभावः एतादृश्यः मृगदृशो हरिणनयनाः प्रतिमन्दिरं मन्दिरे मन्दिरे वीप्सायामव्ययीभावःसन्त्येव एवकारेण सौलभ्यं द्योत्यते किन्तु इदं चित्रमद्भुतमाश्चर्यम् इत्यर्थः । एतच्चित्तहरं मनःस्वाधीनताकारि एवं च शरीरस्याधीनताकरणमसुकरमिति व्यज्यते । वित्तं वसु पुनः एकदा तु दत्तमेवेति भावः । युवा तरुणः युवपदं सकलनायिकास्पृहणीयतां ध्वनयति मयि प्रयच्छत्येव ददात्येव एवकारेण निवारणकरणेपि न वै दान्यताम्[1]आवहतीति ध्वन्यते एवं च विना द्रव्यदानं सुलभतरा एवं वाराङ्गनास्तथापि ताः सन्त्यज्य द्रव्यदानादिनापि मामेव भजते इत्यहो किमत्र वीजमिति न जाने अत्र किं कारणं तु न जाने इत्यर्थः चित्तं मय्येव मय्यास्थितमेव व्याचख्युस्तन्न स्वीयापरकीयानां द्रव्यदानाप्रसक्त्या व्यावर्तकत्वात् व्यर्थत्वापत्तेः नच वेश्यान्तरं व्यावर्त्यमिति वाच्यम् । तस्यापि लक्ष्यत्वात् एवं च द्रव्यदानकारणस्य मन्मथकलावैशद्यस्य स्वयमुपन्यस्तत्वात् तत्कारणप्रश्नस्यानौचित्यमिति दूषणमपास्तम् । अलंकाराः पूर्ववदुन्नेयाः । शार्दूलविक्रीडितं वृत्तम् ॥ ७४ ॥

क्रमप्राप्तामभिसारिकां लक्षयति । स्वयमिति । अभिसरणाभिसारणान्यतरवत्त्वमित्यर्थः उक्तं च 'या कान्ताभिसरत्कान्तं सारयेद्वाभिसारिका' इति अस्याश्चेष्टामाह समयेति समयानुरूपं श्वेतनीलादि स्वीयापरकीययोरभिसारव्यापारस्तुल्य एवेत्याह दूतीत्यादि इतिपूर्वोक्तप्रकारेण तुकारश्चार्थे प्रकृत एवमन्य इत्यर्थः क्रमः अभिसारव्यापारः तथैव दर्शनादितिभाव इति केचित् वस्तुतस्तु यथा श्रुतमेव साधनम् अलक्ष्यतासंपादकस्य श्वेताद्याभरणग्रहणस्य स्वीयाभिसारिकामप्येतेे भेदोदाहरणपद्ये इतरव्यावर्तके वलवद्दोषापादनानुपपत्तेः अतएव परकीयामभिसारिकामभिधाय ज्योत्स्नाभिसारिकेत्यादिभेदत्रयं तस्या एवाभ्यधाय अन्यथाध्वान्ताभिसारिकोदाहरणः

१ न वैरस्यतामावहतीति पाठान्तरम् ।

वाचं माङ्गलिकीं तनोति तिमिरस्तोमोपि झिल्लीरवै-
र्जातोऽयं दयिताभिसारसमयो मुग्धे विमुञ्च त्रपाम् ॥ ७५ ॥

मध्याभिसारिका यथा—

भीतासि नैव भुजगात्पथि मञ्जुजस्य
सङ्गे पुनः किमपि कम्पमुरीकरोषि ।

समये पद्ये स्वैरिणीतिपदोपादानासङ्गतेः । नच दिवाभिसारिकोदाहरणपद्ये शुद्धान्तपदोपादानात् स्वीयाभिसारिकायामप्येते भेदा इति वाच्यम् । शुद्धान्ते जारेणापि सह सङ्गतेः सम्भवात् ज्योत्स्नाभिसारिकेत्यादौ मात्रपदमवश्यं पूरणायम् । अन्यथा ध्वान्ताभिसारिकोदाहरणपद्ये इतर-व्यावर्तकं केवलपदोपादानानुपपत्तेः प्रकृत एवक्रमः भर्तुः शुश्रूषादिरूपः । मुग्धाभिसारिकामुदा-हरति । दूतीति । काचिन्नायिका वक्ति हे मुग्धे विद्युत् तडिदेव दूती आकारिकेति भावः विद्युत्पदं क्षणाद्यवस्थायित्वं तच्च शीघ्रगमनार्हतां ध्वनयति उपगता प्राप्ता नन्वेतस्याश्चापल्यशालित्वं कथमनया सह गन्तव्यमत आह रात्रिर्निशैव सहचरी सखी सहस्थायिनी सहतिष्ठति तथा चानयैव सह गतव्यमिति भावः । ननु सहचरीसत्त्वेपि शुभसमयाभावे कथं गन्तव्यमत आह जलदो मेघएव दैवज्ञः दैवं भाग्यं जानाति ज्योतिर्विदित्यर्थः एवं चेत्तदाज्ञोल्लङ्घनं विधेयमिति ध्वन्यते । स्वनेन शब्देन वेलां प्रस्थानगमनसमयं समीचीनां शुभां दिशति कथयति एवं चायमेवावसरः शुभ इत्यभिधीयते अतोऽमुना घनेन झटिति प्रस्थातव्यमिति व्यज्यते किंच तिमिरस्तोमोपि ध्वान्तनिकरोऽपि 'स्तोमौघनिकरव्रात' इत्यमरः । झिल्लीरवैः चीरिकाशब्दैः 'भृङ्गारीचीरिकाझिल्ली'त्यमरः माङ्गलिकीं मङ्गलप्रयोजिकाम् वाचं तनोति विस्तारयति एवं चानेन तिमिरमपि मङ्गलवचनं वक्ति किमुत चेतनकः सखीनिवह इति व्यज्यते अयमासन्नः दयिताभिसारसमयः प्रियतमसमीपगमनावसरः जातः ननु लज्जारूपप्रतिबन्धकवशात्कथं गन्त-व्यमत आह त्रपां लज्जां अभिलषितप्रतिबन्धिकाम् विमुञ्च सर्वात्मना त्यज लज्जात्यागेनैतादृग्-योतोचितसमये प्रियमभिसरेति भावः अन्यस्यापि गन्तुमुद्युक्तस्य मुहूर्तादि कथ्यत इति लौकिकम् अत्र विद्युदादीनां दूतीत्वादिकथनेन इवाद्यभावेन च लुप्तोत्प्रेक्षाप्यलंकारः । स्पष्टम-न्यत् । शार्दूलविक्रीडितं वृत्तम् ॥ ७५ ॥

मध्यामभिसारिकामुदाहरति । भीतासीति । नायको नायिकां वक्ति हे तन्वि एवं च

१ लज्जात्यागेन एतावदुचितसमये इति पाठान्तरम् ।
 वेदं एतच्छ्लोकटीकासमाप्तिपर्यन्तं मुद्रिते पुस्तके ।

अम्भोधरध्वनिभिरक्षुभितासि तन्वि
मद्वाचि साचिवदनासि किमाचरामि ॥ ७६ ॥

प्रगल्भाभिसारिका यथा—

स्फुरदुरसिजभारभङ्गुराङ्गी
किसलयकोमलकान्तिना पदेन ।
अथ कथय कथं सहेत गन्तुं
यदि न निशासु मनोरथो रथः स्यात् ॥ ७७ ॥

---

भारवहनाक्षमत्वं तेन च कम्पाद्यङ्गीकारानौचित्यं ध्वन्यते पथि मार्गे भुजङ्गात् सर्पात् पदस्पृष्टादिति भावः नैव भीतासि भयं नैव प्राप्तासि यद्वा भीतैव नासि एवं च तत्कार्यकम्पादिदूरापारतमिति द्योत्यते पथिपदं विस्पष्टदर्शनायोग्यतां ध्वनयति भुजंगपदमवश्यपरिहरणीयत्वं भयजनकत्वं वा व्यञ्जयति मद्भुजस्यापरिहरणीयस्याभयजनकस्य वेति भावः । किंसङ्गे इपत्सङ्गे एवं च गाढालिङ्गने किं करिष्यतीति न जाने इति व्यज्यते । कम्पं वेपथुम् उरीकरोषि अङ्गीकरोषि सात्विकभावोदयादितिभावः । किञ्च अम्भोधरध्वनिभिः सजलजलदाननदैः बहुभिर्भयंकरैरितिभावः अक्षुभितासि साध्वसं न प्राप्तासि अनेन क्षुभितासीति ध्रुक्तम् मद्वाचि मद्वचने एकस्मिन् भयाजनके साचिवदनासि तिर्यङ्कमितासि लज्जयेति भावः किमाचरामि किं करोमि तथा चात्र दैवमेव शरणमिति भावः । अत्र भुजंगादेर्भीतिहेतोरपि भयानुत्पत्तिकथनाद् भीत्यहेतुभुजसंगादेर्भीत्युत्पत्तिप्रदर्शनाच्च विशेषोक्तिविभावः नासंसृष्टिः इतरतस्पष्टम् । वसन्ततिलका वृत्तम् ॥ ७६ ॥

प्रौढाभीसारिकामुदाहरति । स्फुरदिति । कापि सखी मद्वचनादिनेयमागता न स्वाभिलाषेणेति वादिनं नायकं प्रत्याह अथेति प्रश्ने । यदि मनोरथः अभिलाषः स एव रथः स्यन्दनः गमनसाधनइत्यर्थः मनोरथपदमत्यन्तद्रुतगमितामावेदयति न स्यान्न भवेत् तर्हि स्फुरदुरशिजभारभङ्गुराङ्गा स्फुरन्तौ विलसन्तौ यावुरसिजौ स्तनौ तयोर्भारेण भङ्गुरं भङ्गशीलमङ्गं यस्याः सा नायिका उरसिजपदं दुर्वहतां व्यञ्जयति भङ्गुराङ्गीपदेन गत्ययोग्यता ध्वन्यते किसलयकोमल-

परकीयाभिसारिका यथा—

रभसादभिसर्तुमुद्यतानां
वनितानां सखि वारिदो विवस्वान्।
रजनी दिवसोन्धकारमार्चि-
र्विपिनं वेश्म विमार्ग एव मार्गः॥ ७८॥

---

कान्तिना पल्लवमृदुत्वशोभाशालिना अत्र कान्तपदमधिकमिव भाति वस्तुतस्तु कोमलपदं भावपरं एवं च कोमलसहिता कान्तिरिति समासं विधाय किसलयपदेन समासः पदेन चरणेन निशासु रात्रिषु ऐते नोच्चावचप्रदेशज्ञानवैधुर्यं तच्च वहुक्लेशागमनवत्त्वं ध्वनयति बहुवचनेन च यदीयभवन्निवन्धमात्रादेवागता स्यात्तर्हि कदाचिदेव न वहुवारम् तस्मादभिलाषेणेवागतेति व्यज्यते कथं केनोपायेन गन्तुं भवत्सन्निधिं प्राप्तं सहेत समर्था भवेदित्यर्थः एवं चाकेवलं स्वाभिलाषवलेनैवेयमागतेति द्योत्यते अत्र अनुमानं तु कार्यादेः कारणाद्यवधारणमिति लक्षितः प्राप्तिरूपकार्येण मनोरथरूपकारणाद्यवधारणादनुमानालंकारः। स्पष्टमन्यत्। पुष्पिताग्रावृत्तम्॥ ७७॥

परकीयाभिसारिकामुदाहरति। रभसादिति। कापि कथमेतादृशावसरेभिसर्तुमुचितमिति वादिनीं सखीं प्रत्याह हेसखि रभसात् प्रियदर्शनौत्कण्ठ्यात् अभिसर्तुं प्रियं प्रति गन्तुम् उद्यतानां कृतोद्योगानां वनितानाम् अनुरागविशेषवतीनाम् नायिकानाम् 'वनिताजनितात्यर्थानुरागायाञ्चयोषिति' इत्यमरः वारिदो जलदः बहुलपङ्कसम्पादकः स एव विवस्वान् भास्वान् पङ्किलमार्गशुष्कतासम्पादनाजनितात्यर्थानुरागक इति भावः एवञ्चान्यजनसञ्चारायोग्यएव पथ्यस्मद्गमनमुचितमिति व्यज्यते रजनी रात्रिः जनगमनयोग्यताशून्या सैव दिवसो वासरः गमनयोग्यः एवमन्यगमनायोग्यसमय एवास्माकं गमनयोग्य इति ध्वन्यते किंच अन्धकारः ध्वान्तम् मार्गदर्शनप्रतिवन्धकम् तदेवार्चिस्तेजः एवञ्चान्यजनमार्गदर्शनप्रतिवन्धकमनुगुणमिति व्यज्यते ननु पङ्किलेऽपि पथि वहुलान्धकारात्तत्रापि कैश्चिदज्ञायत एवातआह किंच विमार्ग एव अपथएव सर्वदान्यजनापरिचित इति भावः मार्गः सरणिः अस्मत्परिचित इति भावः एवं चान्यजना-

ज्योत्स्नाभिसारिका यथा—

चन्द्रोदये चन्दनमङ्गकेषु
विहस्य विन्यस्य विनिर्गतायाः ।
मनो निहन्तुं मदनोपि बाणान्
करेण कौन्दान् विभराम्बभूव ॥ ७९ ॥

---

लोचनाविषयमार्गं एवास्माकं समुचितं इति द्योत्यते ननु तत्र सदनाभावात्कथं क्रीडेत्यत आह विपिनं वनम् अन्यसञ्चारलेशशून्यम् तदेव वेश्म गृहम् एवं च क्रीडास्थानं विपिनमेवास्माकमत्यन्तोचितमिति व्यज्यते अत्र प्रौढोक्तिस्तदशक्तस्य तच्छक्तत्वादिकल्पनमिति लक्षणलक्षितागमनादिसौकर्यायासमर्थस्यापि मेघादेः तच्छक्तत्वकल्पनात् प्रौढोक्तिः अभिसारिकां प्रतिगमनादिसौकर्यसाधारणकार्यदर्शनान्मेघादेः सवितृत्वादिसंभावनया इवाद्यभावेन च लुप्तोत्प्रेक्षा च । स्फुटमन्यत् । मालाभरणीयो वृत्तम् ॥ ७८ ॥

सामान्यतः परकीयामभिसारिकामुदाहृत्य तद्विशेषानुदाहरन् ज्योत्स्नाभिसारिकामुदाहरति । चन्द्रोदयइति । काचित्काञ्चित्प्रत्याह चन्द्रोदये चन्द्रपदं गमनसाहाय्यसम्पादकतयाऽऽह्लादविशेषजनकतां व्यञ्जयति अङ्गकेषु अनुकम्पगात्रेषु प्रियविरहजनुषा । अनुकम्पायां कन् । चन्दनं विन्यस्यालिप्य श्वेते श्वेतवस्तु भेदप्रतीतिर्झटिति न भवतीति धिया चन्दनकरनिकरसरूपचन्दनधारणमकरोदिति भावः एवं च तनुतराणामङ्गानांविरहयोगाद्दूरतया चन्दनदीधितावदृश्यत्वेपि चन्दनलेपसम्पादनेनात्यन्तादृश्यत्वं ध्वन्यते विहस्य स्मित्वा सम्यगिदमलक्ष्यतासम्पादकं जातमिति धियेतिभावः यद्वा हास्यस्यापि सुधानिधिदीधितिसमतयात्यन्तालक्ष्यतया तत्संपादकमेतदिति भावः । अथवा एतावन्तं समयमनङ्गो मामपीडयदिदानीं किं किमनेन विधेयमिति धियेति भावः निर्गतायाः प्रियं प्रत्यभिसृतायाः मनश्चित्तं निहन्तुं व्यापादयितुम् । एवं चैतादृशाममिचारकारिप्रधानभूतचित्तव्यापादनेनेतरेन्द्रियजातमपि व्यापादितप्रायमिति व्यज्यते मदनोपि मन्मथोपि तद्गर्वमसहमान इति यावत् करेण किरणेन कौन्दान् कुन्दपुष्पाण्येव बाणान् शरान् पुष्पशरत्वात्तस्य विभरांवभूव दध्रे विरहिदुःसहकुन्दपुष्पाणि विकासयन्ति स्म । एवं च तदप्येतस्याः श्वैत्यविशेषसम्पादकतयानुगुणमेव जातमिति व्यज्यते । उपजातिवृत्तम् ॥ ७९ ॥

तमिस्राभिसारिका यथा—

नाम्बुजैर्न कुमुदैरुपमेयं
स्वैरिणीजनविलोचनयुग्मम् ।
नोदये दिनकरस्य नवेन्दोः
केवले तमसि तस्य विकाशः ॥ ८० ॥

दिवसाभिसारिका यथा—

पल्लीनामधिपस्य पङ्कजदृशा पर्वोत्सवामन्त्रणे
जाते सद्मजना मिथः कृतमहोत्साहं पुरः प्रस्थिताः ।
सव्याजं स्थितयोर्विहस्य गतयोः शुद्धान्तमत्रान्तरे
यूनोः स्विन्नकपोलयोर्विजयते कोऽप्येष कण्ठग्रहः ॥ ८१ ॥

---

तमिस्राभिसारिकामुदाहरति । नाम्बुजैरिति । काचित्काञ्चित्प्रत्याह स्वैरिणीजनविलोचनयुग्मम् स्वैरिणीजनो व्यभिचारिणीजनः तस्य नेत्रद्वन्द्वम् जनपदं सर्वासामेकरूपतां द्योतयति विलोचनपदं सूक्ष्मग्राहकतां व्यञ्जयति अम्बुजैः सूर्यविकासिभिरित्यर्थः । कुमुदैश्चन्द्रविकासिभिः नोपमेयम् । तत्रहेतुमाह दिनकरस्य सूर्यस्य इन्दोश्चन्द्रस्य उदये यस्य न विकासः किन्तु केवले निविडे इत्यर्थः तमस्यन्धकारे विकासः व्यतिरेकालङ्कारोऽत्र अत्र नोदये इत्यादावुभयत्रैकतया चारितार्थ्ये द्वितीयोपादानमानिदानमाभाति पूर्वं तु नयनद्वयाभावे चकारापेक्षा स्यादिति तदभावे तदुपादानं मिलितं यदभिरामताधिक इत्यत्रेवात्रोत्तरवाक्यान्तर्गतयच्छब्दस्य न तच्छब्दापेक्षा । स्वागतावृत्तम् ॥ ८० ॥

दिवसाभिसारिकामुदाहरति । पल्लीनामिति । पल्लीनां घोषाणाम् अधिपस्य स्वामिनः पल्लीनामधिपस्य चेति वहुवचनैकवचनाभ्यां भाग्यातिशयशालित्वं ध्वन्यते यद्वा निमन्त्रणापरिहार्यत्वं व्यज्यते पङ्कजदृशां कमलनयनानाम् वहुवचनमादरातिशयं व्यनक्ति पूर्वोत्सवामन्त्रणे पर्वणि चैत्रपौर्णमास्यादौ उत्सवः कौतुकम् तदर्थमामन्त्रणे जाते पत्न्यधिपाङ्गनाभिः सम्पादिते सति सद्मजना गृहजनाः मिथः परस्परम् कृतमहोत्साहम् सम्पादितो महोत्साह उद्योगो यत्र क्रियायां

सामान्यवनिताभिसारिका यथा—

लोलच्चोलचमत्कृतिप्रविलसत्काञ्चीलताझंकृति-
न्यञ्चत्कञ्चुकबन्धबन्धुरचलद्वक्षोजकुम्भोन्नतिः ।
स्फूर्जद्दीधितिविस्फुरद्गतिचलच्चामीकरालंकृतिः
क्रीडाकुञ्जगृहं प्रयाति कृतिनः कस्यापि वाराङ्गना ॥ ८२ ॥

श्रीनिधेः ।

मुग्धाया लज्जाप्राधान्येन मध्याया लज्जामदनसाम्येन प्रगल्भायाः प्राकाश्यप्राधान्येन धीराया धैर्यप्राधान्येनाऽधीराया अधैर्यप्राधान्येन धीरा-

---

पुरः अग्रे सान्तरमित्यर्थः प्रस्थिताः प्रचलिताः पल्यधिपसदनमित्यर्थः अत्रान्तरे एतत्समये सव्याजं सकपटम् किञ्चिद्व्यपदिश्य स्थितयोः अवस्थितयोः क्रीडनार्थम् विहस्य कथमेते प्रतारिता इति धियेत्यर्थः शुद्धान्तमेव वात्ररोधं 'शुद्धान्तश्चावरोधश्च' इत्यमरः गतयोः प्राप्तयो स्विन्नकपोलयोः परस्पराङ्गसञ्जातसात्विकभावोदयादिति भावः यूनोस्तरुणयोः 'पुमान् स्त्रिये'त्येकशेषः कोप्येष सर्वतो विलक्षणइत्यर्थः कण्ठग्रहः कण्ठाश्लेषः विजयते सर्वोत्कर्षेण वर्तते एवं चालिङ्गनेवसानाभावो व्यज्यते ज्योत्स्नाभिसारिकादयो भेदाः परकीयाया एव न सर्वासामित्यत्र किं विनियामकमिति चेत्कथं च स्वैरिणीपदं मदालक्ष्ये इत्यलं वृथावाग्विलासेन । शार्दूलविक्रीडितं वृत्तम् ॥ ८१ ॥

वेश्यामभिसारिकामुदाहरति । लोलच्चोलेति । गतिविशेषवशात् चञ्चलं यच्चोलमंशुकं तस्य चमत्कृतिश्चमत्कारो यत्र प्रविलसत्काञ्चीलताझंकृतिः प्रविलसन्ती शोभाशालिनी तदङ्गसङ्गादिति भावः या काञ्चीलता मेखला तस्या झंकृतिः स्वरविशेषो यत्र न्यञ्चन्नीचैर्गच्छन् यः कञ्चुक-बन्धः कूर्पासकग्रन्थिः तया बन्धुरा नम्रा 'बन्धुरं तून्नतानत'मित्यमरः अत एव चलन्ती तिर्यक्प्रसारिणी वक्षोजकुम्भोन्नतिः कुचकलशदीर्घता यत्र स्फूर्जद्दीधितिः स्फूर्जन्ती अत्यन्तप्रकाशा दीधितिर्यत्र शीघ्रगमनौत्सुक्यादिति भावः अतएव चलच्चामीकरालंकृति चलन्ती चञ्चला चामीकरालंकृतिः सौवर्णालङ्करणादिर्यत्र सर्वाण्येतानि क्रियाविशेषणानि वारङ्गना वेश्या कस्यापि कृतिनः अनिर्वचनीयसम्पत्तिशालिनः क्रीडाकुञ्जसदनम् प्रयात्यभिसरति । शार्दूलविक्रीडितं वृत्तम् ॥ ८२ ॥

धीराया धैर्याधैर्यप्राधान्येन ज्येष्ठायाः स्नेहाधिक्यप्राधान्येन कनिष्ठायाः स्नेहन्यूनत्वप्राधान्येन, परोढायाः संगुप्तिप्राधान्येन मुग्धाया इव कन्यकायाश्च सामान्यवनिताया धनप्राप्तिप्राधान्येनाष्टविधनायिकावर्णनमिति शेषः।

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः।
गन्तुं निश्चलचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवितप्रियसुहृत्सार्थः किमु त्यज्यते॥ ८१॥

---

निरूपितं परिशेषयेति। मुग्धाया इत्यादिप्राकाश्यम् मुग्धाया इवेति लज्जाप्राधान्येनेत्यर्थः प्रोष्यत्पतिकां नवमीं नायिकां निरूपयितुं भूमिकामारचयन् प्राचीनसम्मतिं दर्शयति। प्रस्थानमिति। अव्यवहिताग्रिमसमयसम्मतिविदेशगतिविरहविधुरा स्वजीवितमुपदिशति वलयैः कङ्कणैः प्रस्थानं गमनं कृतम् अजस्रं निरन्तरम् प्रियसखैः प्रियतममित्रैः अस्रैः रक्तैः 'लोहितास्ररक्ते'त्यमरः गतं विरहवशादितिभावः प्रियसखपदं गमनौचितिं ध्वनयति यद्वा प्रियः सखैरिति वलयान्वयि अस्रैरंशुभिः गतं प्रचलितम् धृत्या धैर्येण क्षणमपि नासितम् न स्थितम् धृत्येति स्त्रीलिङ्गेन मत्प्रतीक्षाकारित्वौचित्येपि तदकरणेन तव तु विजातीयस्य तदनुचितमिति व्यज्यते। किञ्च चित्तेन मनसा पुरस्तादग्रत एव गन्तुं व्यवसितमुद्युक्तम् एवञ्च संभृतसामग्रीकतया प्रियतमस्थितिमत्वेपि तत्पश्चात्स्थित्यभावो व्यज्यते इति सर्वे वलयादयः प्रियतमे कान्ते यातुं देशान्तरे गन्तुम् निश्चितचेतसि कृतनिर्णये सति समं परस्परमेककालं प्रस्थिताः चलिताः यत्तु समं प्रियसमकालमित्याहुः तत् कृतमित्यादिक्तप्रत्ययार्थविरोधादसमञ्जसमिवाभाति प्रकृतमाह गन्तव्ये सति प्रियतममन्तरावस्थातुमशक्यत्वात्। प्रियसुहृत्सार्थः प्रियसुहृदां कान्तनिजमित्राणां वलयादीनां सार्थः समूहः एवञ्च तवापि प्रियसुहृत्त्वेनैतत्सङ्गतिरुचिता गमनौचित्यमगमने चानौचित्यमित्यपि व्यज्यते किमुत्सृज्यते त्यज्यते एवं चावश्यं गन्तव्यत्वे पश्चादवस्थित्या संघपरित्यागः अत्यन्तानुचितमिति भावः। यद्वावगतपतिविदेशगतिमतिरङ्गना नायकं प्रत्याह हे जीवित-

इत्यादिप्राचीनग्रन्थलेखनादग्रिमक्षणे देशान्तरनिश्चितगमने प्रेयसि प्रोष्यत्पतिकापि नवमी नायिका भवितुमर्हति । तथाहितस्याः प्रोषितपतिकाविप्रलब्धोत्कासु नान्तर्भावः भर्तुः सन्निधिवर्तित्वात्, न कलहान्तरितायामन्तर्भावः कलहाभावादनवमानितपतित्वाच्च, नापि खण्डितायामन्तर्भावः प्रियस्यान्योपभोगचिह्नितस्याऽऽगमनाभावात् प्रियायाः कोपाभावदर्शनात् काकुवचनकातरप्रेक्षणादिसञ्चितान्तःपक्षपातदर्शनाच्च, न वासकसज्जामन्तर्भावः वारनियमाभावात् सज्जीकरणाभावनिर्वेदादिदर्शनाच्च, न स्वाधीनपतिकायामन्तर्भावः व्रजन्नपि पतिः स्वाधीनपतिकया निरुध्यतेऽन्यथा भर्तरि स्वाधीनत्वमेव भज्येत नेह तथा सर्वथा भर्तुर्विदेशगमनात् किञ्च निर्वेदाश्रुपातनिश्वासवनविहारादिमदनमहोत्सवव्यतिरेकदर्शनाच्च नाप्यभिसारिकायामन्तर्भावः अभिसारोत्सवाभावात् अन्त-

---

प्रियं जीवितं यस्य प्रियतमं एवं च त्वत्प्रस्थितौ अपि जीवितप्रस्थितिरुच्चिरतरेति ध्वन्यते । यद्वा जीवितं प्रियं यस्यात एवं च स्वसहमदननयनेपि जीवितनयनमुचितमिति व्यज्यते अथवा जीवितात् जीवनात् प्रिय एवं चैतादृशोपदेशार्हत्वमावेद्यते प्रियतमं अर्थाद्वलयादीनां त्वयि यातुं निश्चितचेतसि कृतनिर्णये सति सर्वे वलयादयः समं युगपत् प्रस्थिताः कृतप्रस्थानाः एवं च तवापि गन्तव्ये सति सुहृत्सार्थः सुहृदां साधुहृदां सार्थः । सुहृत्त्वं च त्वत्प्रस्थानज्ञानसमयप्रस्थानकरणात् किमुत्सृज्यते एवं च त्वत्प्रस्थानज्ञानमात्रादेव वलयादिभिर्गतं जीवितेनापि गन्तव्यमिति विघ्नोपदर्शनरूपचेष्टा द्योत्यते यद्यपि प्रियपदस्य पुनरुपादानेन कथितपदत्वं गुण एव यत्त्वैतत्पद्यः प्रियतमगमनोत्तरकालीनजीवितोपदेशपरतयापि सम्भवतीति न प्रकृतार्थसिद्ध्यनुगुणमिति दृष्टकातरनेत्रया चिरतरम्बद्धाञ्जलिं याचितः पश्चादंशुकपल्लवेन विधृतो निर्व्याजमालिङ्गितः इत्याक्षिप्य समस्तमर्थमघृणो गन्तुं प्रवृत्तः शठः पूर्वं प्राणामहो दयितया मुक्तस्ततो वल्लभ इत्युप्रन्यसनीयमित्याहुः तद्यातुं निश्चितचेतसि कृतगमननिर्णये सति नतुगते इत्यन्यथानपरिवबोधनिबंधनं द्वितीयं व्याख्यायान्तु न कापि शङ्केति दिक् । शार्दूलविक्रीडितं वृत्तम् ॥ ८३ ॥

स्तापदर्शनाच्चेति युक्तमुत्पश्यामः। लक्षणं तु यस्याः पतिरग्रिमक्षणे देशान्तरं यास्यत्येव सा प्रोष्यत्पतिका, अस्याश्चेष्टा काकुवचनकातरप्रेक्षणगमनविघ्नोपदर्शननिर्वेदसन्तापसम्मोहनिःश्वासत्राष्पादयः।

मुग्धा प्रोष्यद्भर्तृका यथा—

प्राणेश्वरे किमपि जल्पति निर्गमाय
क्षामोदरीवदनमानमयाञ्चकार ॥
आलिः पुनर्निभृतमेत्य लतानिकुञ्ज—
मुन्मत्तकोकिलकलध्वनिमाततान ॥ ८४ ॥

---

ननु एवमुक्ताष्टविधनायिकास्वेवमन्तर्भावोस्त्येतस्या इत्यत आह। तस्या इत्यादि अग्रिमसमये विदेशगामिपतिका प्रोषितपत्तिकादि त्रितयभेदवती सन्निहितपतिकत्वात् स्वाधीनपतिकावत् एवमग्रेपिलक्षणमाह लक्षणमित्यादि लक्षणमित्युपलक्षणं प्रोष्यत्पतिलक्ष्यनिर्देशः। ऌट वसतेरुष्यदित्यसिद्धेः ऌटः सद्वेति शत्रादेशेन प्रवत्स्यत्पतिकेति वक्तव्यम्। मुग्धां प्रोष्यत्पतिकामुदाहरति। प्राणेश्वर इति। काचित् काञ्चित्प्रत्याह प्राणेश्वरे ईश्वरपदं नियोगानर्हत्वं व्यञ्जयति निर्गमनाय विदेशगमनाय किमपि किञ्चिदपि विरहदुःखोद्रेकजकण्ठावरोधादिति भावः जल्पति पृच्छति सति क्षामोदरी क्षामपदमुक्तिप्रत्युक्तिपाण्डित्यस्थित्यभाववत्त्वं तच्च मुग्धात्वं ध्वनयति। यद्वा विरहवशान्निर्गच्छत्प्राणकण्ठस्थित्यपराधाभावं गमयति। वदनमाननम् आनमयाञ्चकार तूष्णीं बभूवेत्यर्थः लज्जया किमपि वक्तुमशक्यत्वात्। तस्यां तूष्णीमवस्थितायामपि सखी यत्नमकरोदित्याह। आलीत्यादि। आलिः सखी पुनः निभृतं गुप्तम् क्रियाविशेषणमेतत् लतानिकुञ्जम्। 'विशिष्टवाचिकानां विशेषणसमवधाने विशेष्यमात्रपरता' इति न्यायान्निकुञ्जपदेन देशमात्रं लक्ष्यते एवञ्च स्वजातीयबहुलतापरिवृत्तया क्रियमाणकपटस्य प्राकट्यानर्हत्वं द्योत्यते एत्यागत्य। उन्मत्तपिकमनोज्ञशब्दम्। एवं च वसन्तसमयमवगत्यायं स्थास्यतीति धिया उन्मत्तपदं वसन्तीयत्वं द्योतयति कोकिलेतिपुल्लिंगनिर्देशः कामिनीस्वनशङ्काभावमथवा-स्वशब्दसजातीयशब्दतया अप्रामाण्यभावं ध्वनयति स च सखी चातुरीचमत्कारं आततान विस्तारयामास एवञ्च भाविविरहविह्वलतयाएकशब्दानाकर्णनेपि न काचित् क्षतिरिति ध्वन्यते। वसन्ततिलकावृत्तम् ॥ ८४ ॥

मध्या प्रोष्यत्पतिका यथा—

गन्तुं प्रिये वदति निःश्वसितं न दीर्घ-
मासीन्न वा नयनयोर्जलमाविरासीत् ॥
आयुर्लिपिं पठितुमेणदृशः परं तु
भालस्थलीं किमु कचः समुपाजगाम ॥ ८५ ॥

प्रौढा प्रोष्यत्पतिका यथा—

नाथं मुञ्चति सुभ्रुवामपि तनुत्यागे वियोगज्वर-
स्तेनाहं विहिताञ्जलिर्यदुपते पृच्छामि सत्यं वद ॥
ताम्बूलं कुसुमं पटीरमुदकं यद्बन्धुभिर्दीयते
स्यादत्रैव परत्र तात्किमु विषज्वालावली दुःसहम् ॥ ८६ ॥

---

मध्यां प्रोष्यत्पतिकामुदाहरति । गन्तुमिति । काचित्काञ्चिदाह प्रिये कान्ते गन्तुं विदेशे यातुं वदति पृच्छति सति एणीदृशो मृगलोचनायाः दीर्घमायतं दुःखवशात् निःश्वसितं निश्वासः नतु निःश्वासाः नासीत् नयनयोर्लोचनयोः न तु लोचनस्य जलं नतु जलानि आविरासीत् प्रकटीबभूव प्रश्नसमयसञ्जातमूर्च्छोद्रेकवशादिति भावः परंत्वेतदभूत् कचः कलापैकदेशः कचइवकचः एवञ्च कचर्षितुल्यतया वाचनसामर्थ्यं व्यज्यते । मूर्च्छावशाच्चैलाञ्चलविस्रंसनात् । भालस्थलीं ललाटदेशम् समुपाजगाम । भालस्थलीमिति स्त्रीलिङ्गनिर्देशेन कच इति पुल्लिङ्गनिर्देशेन तां प्रतितस्याभिसरणानौचित्येपि तत्कारितया आकस्मिकात्याहितकार्यवत्ता द्योत्यते तामेवोत्प्रेक्षामुखेनाह किमुशब्द इवार्थे आयुर्लिपिं ब्रह्मलिखितायुष्याक्षरपंक्तिम् । पठितुं वाचयितुमिव तस्यास्तत्र सत्त्वादिति भावः । एवं चैतावदेवायुः किंचिदधिकमस्ति वेति निश्चितुमिति व्यज्यते अश्रूणामप्राकट्येन लज्जावत्त्वं मूर्च्छया च मदनबाधावत्वमिति मध्यात्वं ध्वन्यते । उत्प्रेक्षालङ्कारः । वसन्ततिलका वृत्तम् ॥ ८५ ॥

प्रौढां प्रोष्यत्पतिकामुदाहरति । नाथमिति । काचिदङ्गना द्वारावतीगमनोद्युक्तं श्रीकृष्णं प्रत्याह । भो यदुपते एवञ्चास्मत्पालनार्हत्वं मिथ्याभाषणानर्हत्वं पारलौकिकसकलवृत्तान्ताभिज्ञत्वं ध्वन्यते । सुभ्रुवां स्त्रीणाम् । सुभ्रूपदं तथाविधं पुरुषाणां विहारभावं व्यनक्ति बहुवचनं च सर्वबाधा-

परकीया प्रोष्यत्पतिका यथा—

न्यस्तं पन्नगमूर्ध्नि पादयुगलं भक्तिर्विमुक्ता गुरो-
स्त्यक्तानीतिरकारि किन्न भवतो हेतोर्मया दुष्कृतम् ॥
अङ्गानां शतयातना नयनयोः कोपि क्रमो रौरवः
कुम्भीपाकपराभवश्च मनसो युक्तं त्वयि प्रस्थिते ॥ ८७ ॥

---

साधारणप्रश्नकरणेन स्वस्थपदार्थोद्योगशालित्वं साधारणप्रश्नोत्तरदानेसङ्कोचानर्हत्वं च नायकस्य व्यञ्जयति अयं वियोगज्वरो विरहसन्तापः तनुत्यागे शरीरत्यागेपि न मुञ्चति न त्यजति। यतस्तेन हेतुना विहिताञ्जलिः बद्धाञ्जलिः अहं पृच्छामि प्रश्नं करोमि। सत्यं वद ब्रूहि किं तदतआह उदकं चन्दनं पटीरं कुसुमं ताम्बूलं यद्बन्धुभिः सुहृद्भिः बहुवचनं निषेधायोग्यतां ध्वनयति दीयते मृतोद्देशेन तत्सर्वम्। अत्रैव एतल्लोक एव परत्र परलोकेपि किमु विषज्वालावली दुःसहं स्यात् एवं च विरहिजनस्येह यथैतद्दाहकं तथैव किं परत्रेतिवक्तव्यमितिभावः एवं च भवत्प्रस्थानोत्तरमस्मत्प्राणपरित्यागो द्योत्यते। त्वद्वियोगोवश्यं मन्मरणकारणमिति विज्ञाय यथोचितमाचरणीयमिति द्योत्यते शार्दूलविक्रीडितं वृत्तम् ॥ ८६ ॥

परकीयां प्रोष्यत्पतिकामुदाहरति। न्यस्तमिति। काचिदङ्गना नायकं प्रत्याह। हे कान्त पन्नगमूर्ध्नि पन्नगस्य विषधरस्य मार्गे स्थितस्येत्यर्थः मूर्ध्नि मस्तके पन्नगपदं भयजनकतां गमयति मूर्ध्नीतिपदेन साहसमभिव्यज्यते पादयुगलं चरणद्वन्द्वम्। युगपदं भीतिशून्यतां गमयति न्यस्तं स्थापितम्। गुरोः श्वशुरादेः भक्तिस्तदाज्ञाकारित्वमित्यर्थः। 'भक्तिर्विभागे सेवायाम्' इत्यमरः। अत्यन्तं विमुक्ता त्यक्ता गुरुपदं माननीयतां व्यञ्जयति। किंच नीतिः स्वकुलमर्यादापि त्यक्ता इति भवतो हेतोः 'षष्ठी हेतुप्रयोगे' इति षष्ठी मया किं न दुष्कृतं कृतम्। अपि तु सर्वं कृतमित्यर्थः। 'अंहोदुरितदुष्कृतम्' इत्यमरः अतस्त्वयि प्रस्थिते सति प्रस्थानोद्युक्ते सति अङ्गानामवयवानां शतयातना असंख्याततीव्रवेदना 'यातनातीव्रवेदना' इत्यमरः। किं च। नयनयोः लोचनयोः कोप्यनिर्वचनीयः रौरवः रौरवस्य नरकविशेषस्यायं रौरवः तत्सम्बन्धीत्यर्थः। क्रमो विन्यासः किञ्च मनसश्चेतसः कुम्भीपाकपराभवः कुम्भीपाके नरकविशेषे पीडा भविष्यति इदं युक्तं समञ्जसम्। अंगादीनां प्रत्येकापराधितया प्रत्येकं दण्ड इति भावः। एवं च युक्तैव दुष्कृतिनो नरकावाप्तिरिति भावः। यत्तु रौरवः रुरोर्मृगविशेषस्यायं 'कृष्ण-

सामान्यवनिता प्रोष्यत्पतिका यथा—

मुद्रां प्रदेहि वलयाय भवद्वियोग-
मासाद्य यास्यति बहिः सहसा यदेतत् ॥
इत्थं निगद्य विगलन्नयनाम्बुधारा-
वाराङ्गनाप्रियतमं करयोर्बभार ॥ ८८ ॥

अहितकारिण्यपि प्रियतमे हितकारिण्युत्तमा अस्या उत्तमैव चेष्टा यथा—

पतिः शयनमागतः कुचविचित्रितोरस्थलः
प्रसन्नवचनामृतैरयमतर्पि वामभ्रुवा ॥

---

सारङ्गन्यङ्कुः ' इत्यमरः । क्रमोगतिः त्वदागमनसम्भावनयेतस्ततः सततविलोकनेनैव मरणंभ-विष्यतीति भावः किं च कुम्भ्यां कलश्यां कुम्भीपदं निर्गमकठिनतामावेदयति । पाकः पचनं तद्वत् पराभवः तद्विरहानलातसतनुस्थित्येतिभावइत्यर्थः इत्याहुः तद्दुष्कृतफलत्वबाधने साक्षात् असमर्थ इति न चित्तचमत्कारमारोहति । समासोक्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥८७॥

सामान्यवनितां प्रोष्यत्पतिकामुदाहरति । मुद्रामिति । काचिद्वारवधूवृत्तं काञ्चित्प्रत्याह । वाराङ्गना वेश्या हे कान्त वलयाय कङ्कणकरणाय मुद्रां अंगुलीयकं प्रदेहि वितर ननु वलय-मेवास्तीत्यत आह यत् यस्मात् भवद्वियोगं त्वदीयविरहम् आसाद्य प्राप्य एतद्वलयं हस्ताद्बहिः यास्यति गमिष्यति एवं च त्वद्विरहजाततनुतावशादाकस्मिककङ्कणापगमे त्वन्मङ्गलैकचिन्तन-प्रवणमनस्कया मया तथैवावस्थातुमशक्यत्वादिति भावः । इत्थममुना प्रकारेण निगद्योक्त्वा विगलन्नयनाम्बुधारानिष्पतदश्रुपरंपरा प्रियतमं कान्तम् । तमवविवक्षितार्थः करयोर्हस्तयोः द्विर्वचनं निर्मोचनार्हत्वं द्योतयति बभार दध्रे । वसन्ततिलकावृत्तम् ॥ ८८ ॥

उक्तानामेव पुनरुत्तमादिभेदानाह । अहित्येत्यादि । तत्रोत्तमामुदाहरति । पतिरिति । काचि-त्काञ्चित्प्रत्याह कुचविचित्रतोरस्थलः कुचाभ्यां विचित्रितं मुद्रितमुरःस्थलं तस्य अन्यालिङ्गना-दिति भावः एवं च प्रत्यक्षापराधवता व्यज्यते । शयनं पर्यङ्कदेशमागतः पतिः कान्तः वामभ्रुवा सुन्दरभ्रुवा एवञ्च कौटिल्याभावो द्योत्यते । ' वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे ' इति

अचार्चि सुभगस्मितद्युतिपटीरपङ्कद्रवै-
रपूजि विलसद्विलोचनचमत्कृतैरम्बुजः ॥ ८९ ॥

हिताहितकारिणि प्रियतमे हिताहितचेष्टावती मध्यमा अस्यास्तु व्यवहारानुसारिणी चेष्टा यथा—

कान्ते सागसि कञ्चुकस्पृशितया साचीकृतग्रीवया
मुक्ताः कोपकषायमन्मथशरक्रूराः कटाक्षाङ्कुराः ॥
साकूते दरहासकेसरवचोमाध्वीकधारालसा
प्रीतिः कल्पलतेव का च न महादानीकृता सुभ्रुवा ॥ ९० ॥

---

विश्वः। प्रसन्नवचनामृतैः प्रसन्नानि मनोहराणि वचनानि तान्येवामृतानि तैः अमृतपदं प्राणदातृत्वं व्यञ्जयति अतर्पि प्रीणितः किंच सुभगस्मितद्युतिपटीरपङ्कद्रवैः सुभगा समीचीना या स्मितद्युतिः सैव पटीरपङ्कद्रवाः सरसचन्दनानि तैः। सुभगपदं दुर्लभत्वं द्योतयति द्युतिपदं कान्तस्वान्तभयध्वान्तनिवारकतामावेदयति पङ्कपदं गाढतां गमयति द्रवपदं साररूपतां व्यनक्ति अचर्चि चर्चितः। किञ्च विलसद्विलोचनचमत्कृतैरम्बुजैः विलसती प्रसन्ने ये विलोचने नयने तयोर्यानि चमत्कृतानि चमत्काराः कटाक्षा इत्यर्थः। तान्येवाम्बुजानि कमलानि तैः विलसत्पदं दैर्घ्यं ध्वनयति अम्बुजपदं सरसतां सा च कोपोदयाभावं ध्वनयति। अपूजि पूजितः अतर्प्रीत्यादित्रितयेन भक्तिविशेषो ध्वन्यते तेन चोत्तमचेष्टावत्त्वं। एवञ्च प्रत्यक्षपरिदृश्यमानापराधे भीतिनीतिरीतिशून्येपि प्रेयसि सुहृत्तुल्यतया कपटानालिङ्गिताखिलव्यापारकारितयोत्तमात्वं व्यज्यते अन्यत्रापि स्वसदनमागतः सुहृच्छीतलस्वच्छसलिलचन्दनकुसुमैः संपूज्यत इति लौकिकम्। रूपकालङ्कारः। पृथ्वी वृत्तम् ॥ ८९ ॥

मध्यमामुदाहरति। कान्त इति। काचित्काञ्चित्प्रत्याह सागसि सापराधे एवं च कोपकारणमुचितमिति व्यज्यते कान्ते नायके कंचुकस्पृशि चोलस्पर्शं कुर्वति सति सं सान्त्वनायकृत्वैवेत्यर्थः साचीकृतग्रीवया वक्रीकृतकण्ठ्या कोपवशादितिभावः तया सुभ्रुवा नायिकया कोपकषायमन्मथशरक्रूराः कन्दर्पबाणकठिनाः। तद्बाणानां नूतनपल्लवरूपत्वं रक्तता कटाक्षांकुराः अपाङ्गच्छटाः अङ्कुरपदतीक्ष्णतां व्यनक्ति मुक्ताः प्रेरिताः किंच साकूते साभिप्राये चाटु वचनरचनाकारिणि सति दरहासकेसरवचोमाध्वीकधारालसा दरमीषद्

हितकारिण्यपि प्रियतमेऽहितकारिण्यधमा एषैव निर्निमित्तकोपना चण्डीत्यभिधीयते अस्या निष्कारणकोपत्वादधमैव चेष्टा यथा—

प्रस्थाने तव यः करोति कमलच्छायां मुखाम्भोरुहे
श्रीखण्डद्रवधारया शिशिरया मार्गे पुरः सिञ्चति ॥
तस्मिन्प्रेयसि विद्रुमद्रवनदीरिङ्गत्तरङ्गभ्रमि—
भ्रान्तक्लान्तसरोजपत्रसदृशा भूयो दृशा क्रुध्यसि ॥ ९१ ॥

---

हासो हसितम् प्रासादादिति भावः तदेव केसरं किञ्जल्को यस्मिन् एवंविधं यद्वचो वचनम् । तदेव माध्वीकं 'मधु माध्वीकमद्ययोः' इत्यमरः । तस्य या धारा प्रसृतिस्तयाऽलसा निर्भरा । माध्वीकपदं उन्मादजनकतां व्यनक्ति अलसपदं सविलासतां । काचिदऽनिर्वचनीया प्रीतिः कल्पलतेव कल्पलतावत् कल्पलतातुल्यत्वं च मनोरथसम्पादकत्वात् । महादानीकृता दत्ता । प्रीतेः सर्वाधिकत्वेन दाने महताकल्पलतापि सकेसरमधुधारा निर्भरा भवति मध्यात्वं चात्र स्फुटमेव । शार्दूलविक्रीडितं वृत्तम् ॥ ९० ॥

अधमां लक्षयति । हितेत्यादि । अधमामुदाहरति । प्रस्थाने इति । काचित्सखी नायिकां प्रत्याह । तव प्रस्थाने प्रयाणावसरे निकटकाटिकाशोकविटपविकासकरणायेतिभावः । मुखाम्भोरुहे वदनकमले अर्थात् त्वदीये कमलच्छायाम् कमलेनातपनिवारणम् एवं चोभयोरेकजातित्वेपि कमलेन त्वन्मुखातपवारणरूपसेवाविधायिकतया प्रियस्यातिशयितप्रेमवत्ता व्यज्यते यद्वा सजातीयेन सजातीयखेदापनोदनमुचितमिति ध्वन्यते । किंच । शिशिरया शीतलया श्रीखण्डस्य चन्दनस्य यो द्रवो रसस्तस्य धारा तया पुरः मार्गम् अग्रिमं पन्थानम् सिञ्चति तस्मिन् तादृशे प्रेयसि प्रिये विद्रुमद्रवनदीरिङ्गत्तरङ्गभ्रमिभ्रान्तक्लान्तसरोजपत्रसदृशा विद्रुमाणां प्रवालानां द्रवो निर्यासस्तस्य या नदी तस्यां रिङ्गन्तः खेलन्तः शोभाशालिन इत्यर्थः तरङ्गाः तेषां भ्रमिरावर्तः तत्र भ्रान्तं भ्रमणं प्राप्तम् अतएव क्लान्तं ग्लानिमापन्नं यत्सरोजपत्रं तत्सदृशया विद्रुमपदमारक्ततां द्योतयति रिङ्गत्तरङ्गेत्यादिना चञ्चलत्वं व्यज्यते पत्रपदं प्राशस्त्यं व्यनक्ति भूयो वारंवारम् बहुतरमित्यर्थः दृशा दृष्ट्या क्रुध्यसि प्रकटयसि अत्र संबुद्ध्यनुपादान-

विस्तरभिया प्रत्येकमेतासामुत्तममध्यमाधमभेदा वा नोदाहृता इति। विश्वासविश्रामकारिणी पार्श्वचारिणी सखी अस्या मण्डनोपालम्भशिक्षापरिहासप्रभृतीनि कर्माणि। तत्र मण्डनं यथा—

स्तनकनकमहीधरोपकण्ठे
प्रियकरपल्लवमुल्लसत्प्रमोदम्॥
रहसि मकरिकामिषाल्लिखन्तीं
कमलमुखी कमलैः सखीं जघान॥ ९२॥

उपालम्भो यथा—

सान्द्रध्वानैर्मुखरितदिशः श्रेणयस्तोयदानां
धारासारैर्धरणिवलयं सर्वतः प्लावयन्ति॥

---

मनुचितकार्यकारित्वं नायिकायां ध्वनयति अधमात्वं स्फुटमेव। उपमालंकारः। शार्दूलविक्रीडितं वृत्तम्॥ ९१॥

प्रसंगात् सख्यादीन्निरूपीयंतु सखीकार्याणि विभजते अस्या इत्यादि उपालम्भः सनिन्दवचनम्। तत्र मण्डनमुदाहरति। स्तनकनकेति। काचित्काश्चिदाह स्तनकनकमहीधरोपकण्ठे स्तनौ कुचौ तावेव कनकमहीधरौ स्वर्णगिरी तयोरुपकण्ठः तत्र सन्निहितप्रदेशः कनकपदं उपरि गौरत्वं व्यनक्ति महीधरपदं काठिन्योत्तुङ्गत्वे व्यञ्जयति। उपकण्ठपदं नायककरस्पर्शयोग्यत्वं ध्वनयति। मकरिकामिषात् पत्रावल्यादिलिखनव्याजात् उल्लसत्प्रमोदं सरोमाञ्चमित्यर्थः कुचस्पर्शादितिभावः प्रियकरपल्लवं प्रियस्य कान्तस्य हस्तपल्लवम् प्रियपदं लिखनचिन्तां व्यनक्ति पल्लवपदमरुणतां सा च काश्मीरादिलिखनौचितीं व्यनक्ति रहस्ये एकान्ते एव च नायककरकुचसम्बन्धौचित्यं ध्वन्यते लिखन्तीं सखीम् कमलमुखी नायिका संतोषातिशयो व्यज्यते कमलैः क्रीडासरोजैः जघान ताडयामास कथमन्यदेव लिखतीति धिया इति भावः। यद्यप्यन्ते परिहासोदाहरणमपि सम्भवति तथाप्यत्र परिहासस्य शब्दरूपत्वेन तदभावान्न तदुदाहरणता। पुष्पिताग्रावृत्तम्॥ ९२॥

उपालम्भमुदाहरति। सान्द्रध्वानैरिति। काचिन्नायिका सखीनायकं प्रति वक्ति हे नाथ स्वामिन् नाथपदं स्वेच्छाकार्यकारित्वं व्यञ्जयति सान्द्रध्वानैरनवरतस्वनैः मुखरितदिशः

तेन स्नेहं वहति विपुलं मत्सखीयुक्तमेव
त्वं निःस्नेहो यदसि तदिदं नाथ मे विस्मयाय ॥ ९३ ॥

---

मुखरिता दिशः ककुभो याभिस्ताः तोयदानां मेघानां श्रेणयः पङ्क्तयः धारासारैः धरणिवलयं भूमण्डलं सर्वतः परितः प्लावयन्त्याप्लुतं कुर्वन्ति तेन हेतुना मत्सखी युक्तमेवाबाधितमेव विपुलं सातिशयं स्नेहं प्रेम 'प्रेमस्नेहोथदोहदम्' इत्यमरः। वहत्यङ्गीकरोति तथाविधोद्दीपकतोयदपङ्क्तिविलोकनेन मद्विरहमसहमानः प्रियोधुनैवायास्यतीति धियेति भावः। तथात्वेपि यत्त्वं निस्नेहः प्रेमशून्योसि वर्तसे तदिदं मे विस्मयायाऽऽश्चर्याय तथाविधानुरागशालिन्यामपि भवाननुरागीति कथं प्रियत्वमिति त्वयि विस्मय इति भावः इति प्राञ्चः। वयंतु तोयदपदं मित्रलक्षकं तथा च मित्रश्रेणयः अर्थात्सखीपङ्क्तयः सान्द्रध्वानैः बहुतरोपालम्भवचनैः मुखरितदिशः। एवं च सर्वत्रोपालम्भकरणे न सर्वत्र शक्यमानत्वं नायिकायामभिव्यज्यते धारासारैः अनवरतप्रचलिताश्रुधाराभिः धरणिमण्डलं भूमण्डलम् सर्वतः सर्वप्रदेशे प्लावयन्ती एवं चातिशयितदुःखमावेद्यते तेन हेतुना मत्सखी न तव विपुलं स्नेहमेव एवकारेण कोपलेशशून्यत्वमावेद्यते वहति इदं युक्तं। यद्वा एवकारोत्रैवान्वेति हे नाथ एवं च शिक्षानर्हत्वं व्यज्यते त्वं निस्नेहो यदसि तदिदं मे विस्मयायेत्यर्थः एवं च बहुतरानेकसख्युपालम्भरोदनाद्युपावशान्नायिकायाः स्नेहवत्वं तव तु न कोपि तथाविधोपकारीति न तव स्नेहवत्तेति नास्माकं विस्मय इति भावः। यद्वा श्रेणय इति स्त्रीलिङ्गनिर्देशेन नायिका सजातीयतया तदभिमतत्वदागमनसंपादनाय मेघपङ्क्तयः सान्द्रध्वानपुरःसरधारासाररूपोद्दीपनविभावादि अलंकुर्वन्ति नैव सम्पादकोक्तकारणेनैव मत्सखी झटिति त्वय्यभिमानपरित्यागपुरःसरयुक्तमाबन्धितं स्नेहंकरोति तेनैवस्नेहसंपादककारणेनैव निःस्नेहोसि तदिदं द्वयमपि मे विस्मयाय एवं च यथाविधपयोदपङ्क्तिरूपत्वात् धैर्ये स्नेहसंपादनानौचित्योपि स्नेहसंपादनमभिनवजलदागमरूपोद्दीपनविभावकामिनीसरलहृदयपरिज्ञानरूपस्नेहसम्पादनसत्त्वेपि स्नेहसम्पादनमिति द्वयम् कौतुकावहमिति भावः। एवं च नायिका सरलहृदया त्वं तु दुर्हृदय इति सनिन्दवचनरूपोपालम्भोभिव्यज्यते। अत्र विशेषोक्तिर्विभावनालङ्कार इतिब्रूमः। मन्दाक्रान्तावृत्तम् ॥ ९३ ॥

शिक्षा यथा—

सानन्दमालि वनमालि विलोकनाय
निर्गच्छ कुञ्जमिति किन्तु विचारयेथाः।
झङ्कारिणो मधुलिहो दिवसे भ्रमन्ति
रात्रौ पुनश्चपलचञ्चुपुटाश्चकोराः॥ ९४॥

परिहासो यथा—

आगारभित्तिलिखितासु निवेदयस्व
कः सप्तमो दशसु मूर्तिषु लोकभर्तुः॥

---

शिक्षामुदाहरति। सानन्देति। काचित्सखी नायिकां प्रत्याह। हे आलि सानन्दम् वनमालि-विलोकनाय श्रीकृष्णसन्दर्शनाय। कुञ्जलतापिहितप्रदेशम् निर्गच्छ प्रयाहि किंत्विति वक्ष्यमाणं विचारयेथाः विचारय। किं तदित्यतआह झंकारिणः सशब्दाःमधुलिहो भ्रमराः दिवसे दिने भ्रमन्ति संचरन्ति एवं च त्वद्वदनाभिनवसौरभ्यलोलुपतयाऽऽगतोलिपटलीनिनादैर्यः कोपि त्वां ज्ञास्यतीति व्यज्यते। ननु रात्रावेव गन्तव्यमतआह रात्रौ पुनश्चपलचञ्चुपुटाः। चपलानि चन्द्रिकास्वादलंपटानि चंचुपुटानि त्रोटिपटानि येषां ते 'चञ्चुस्त्रोटिरुभे समे' इत्यमरः। चकोराः पक्षिविशेषाः भ्रमन्ति एवं चापित्वद्वदनाभिचन्द्रिकास्वादलम्पटानि चञ्चुपुटानि येषां ते चन्द्रिकापानायागतचकोरचञ्चुनिनदैः य कश्चन ज्ञास्यतीति तथा गन्तव्यं यथा न केनापि ज्ञायत इति व्यज्यते यद्वा झंकारिणी मुखराः मधुलिह इव मधुलिहः दुर्जनाः। दिवसे भ्रमन्ति झंकारिपदेन विज्ञातमर्थं सर्वत्रावेदयिष्यन्तीति द्योत्यते मधुलिट्पदेन औद्धत्यं वक्तव्यावक्तव्यविवेकराहित्यं पापभीरुत्वाभावश्च व्यज्यते रात्रौ पुनः चपलचञ्चुपुटाः पिशुनाः रात्रिगतनिखिलवृत्तान्तावेदकाः चकोरा हि यथा रात्रिव्यापारेणैव स्वोदरपूर्तिं कुर्वंति तथा रात्रिव्यापारप्रवीणाः यामिका इत्यर्थः भ्रमन्ति। एवं च दिवारात्रावपि दुर्जनयामिकादिबहुभयवत्त्वात् गमनमनुचितमित्यवगत्य यदीच्छसि गन्तुं तदा गच्छ सुखेनेत्यौदासीन्यमावेद्यते केचित्तु मधुलिट्चकोरशब्दाभ्यां गानाधारपानलोलुपप्रतीतिरूपबाधकसत्वमित्यप्याहुः। वसन्ततिलकावृत्तम्॥९४॥

परिहासमुदाहरति। आगारेति। काचित्कांचिदाह आगारभित्तिलिखिता विविधपुटभेदकुड्य-

इत्थं सखीजनवचः प्रतिपद्य सद्यः
सीतास्मितद्युतिभिरुत्तरयांचकार ॥ ९५ ॥

सख्याः परिहासवत् प्रियस्यापि परिहासः यथा—

भ्रूसंज्ञया दिशसि तन्वि सखीं न वाग्भि-
रित्थं विहस्य मुरवैरिणि भाषमाणे ॥
राधा चिराय दशनव्रणदूयमान-
बिम्बाधरा वदनमानमयाञ्चकार ॥ ९६ ॥

प्रियस्य परिहासवत् प्रियायाः परिहासः यथा—

दिव्यं वारि कथं यतः सुरधुनी मौलौ कथं पावको
दिव्यं तद्धि विलोचनं कथमहिर्दिव्यं स चाङ्गे तव ॥

---

विद्यमानासु लोकभर्तुर्विष्णोः । दशसु मूर्तिषु मत्स्याद्यवतारेषु सप्तमोवतारः कः किंसंज्ञक इत्यर्थः । इति निवेदयस्व कथय तन्नामग्रहणं कुर्वितिभावः । इत्थं पूर्वोक्तप्रकारं सखीजनवचः सखीसमूहवाक्यं प्रतिपद्य प्राप्य सीतास्मितद्युतिभिः हास्यदीप्तिभिः उत्तरयाञ्चकार उत्तरमाचख्यौ एवं च तथाविधहसितेनैव मत्प्रियतमनामायमित्युत्तरमिति भावः । वसन्ततिलका वृत्तम् ॥ ९५ ॥

प्रसङ्गात्परिहासं प्रियस्योदाहरति । भ्रूसंज्ञयेति । हे तन्वि प्रियसखीं वयस्याम् भ्रूसंज्ञया कटाक्षविशेषेण दिशसि उपकरणसामग्र्यर्थमाज्ञापयासि वाग्भिर्वचोभिः किमिति न दिशसीत्थम् अमुना प्रकारेण विहस्य एवं चाधरदशनदंशाज्ञानमावेद्यते मुरवैरिणि मुरारौ भाषमाणे वदति सति चिराय बहुकालं दशनव्रणदूयमानविम्बाधरा दशनक्षतकृष्यमाणविम्बोष्ठी । एवं च वचनरचनासामर्थ्यमभिव्यज्यते राधा वदनं मुखम् आनमयाञ्चकार नम्रीचकार लज्जावशादितिभावः । यद्वा चिराय वदनम् आनमयाञ्चकारेति योजना अत्र दशनदंशप्रदर्शने परिहासः । वसन्ततिलकावृत्तम् ॥ ९६ ॥

प्रियपरिहासप्रसङ्गात् प्रियापरिहासमुदाहरति । दिव्यमिति । पार्वती शिवं प्रत्याह हे शंभो यत यस्मात् मौलौ मस्तके । एवं चातिशयप्रेमाऽऽवेद्यते तव साहाय्यकारित्वं सुरधुनी मन्दाकिनी एवं चान्यथा विधानसामर्थ्यं द्योत्यते यतः वारिजले दिव्यं शपथविशेषः कथं न युक्तमित्यर्थः । तथा पावको वह्निः दिव्यं कथं यतस्तद्विलोचनं विलोचयति तन्नयनम् एवं च त्वदभिमतविधाननिपुण एवायमनल इति व्यज्यते तथा अहिः सर्पः । कथं दिव्यं यतः स चाहिस्तवाङ्गे

तस्माद् द्यूतविधौ त्वयाद्य मुषितो हारः परित्यज्यता-
मित्थं शैलभुवा विहस्य लपितः शम्भुः शिवायास्तु वः ॥ ९७ ॥

दूत्यव्यापारपारङ्गमा दूती यस्याः संघट्टनविरहनिवेदनादीनि कर्माणि—
संघट्टनं यथा—

अञ्चति रजनिरुदञ्चति तिमिरमिदं चञ्चति मनोभूः ॥
उक्तं न त्यज युक्तं विरचयदक्तं मनस्तस्मिन् ॥ ९८ ॥

विरहनिवेदनं यथा—

चक्रे चन्द्रमुखी प्रदीपकलिका धात्रा धरामण्डले
तस्या दैववशाद्दशापि चरमा प्रायः समुन्मीलति ॥

---

देहे एवं चाहिर्निशाङ्कसङ्गशालिनो भुजङ्गस्य त्वदधीनतया त्वदभीष्टसम्पादकत्वमेवेति ध्वन्यते एवं दिव्यादिविधानं परिहृत्य हारापहारं सिद्धवत्प्रत्याह तस्माद्धेतोः अद्य द्यूतविधौ द्यूतप्रसङ्गे एवं च चौर्यमिथ्याभिलापादिनियतमिति व्यज्यते मुषितश्चोरितः हारो मुक्ताभूषणं परित्यज्यताम् एवं च दैन्याभावो द्योत्यते तेन च स्वस्मिन्नाधिक्यम् इत्थममुना प्रकारेण शैलभुवा पार्वत्या एवं च कठिनहृदयत्वम् द्योत्यते तेन च तर्जनताडनकरणप्रवणत्वं च । विहस्य परिहासो व्यज्यते लपित उक्तः शंभुः शंकरः एवं च कल्याणकरणं सुकरमिति व्यज्यते वोभवतां शिवाय कल्याणायास्तु । शार्दूलविक्रीडितं वृत्तम् ॥ ९७ ॥

प्रसङ्गाद्दूतीं निरूपयति । दूत्येति । दूतस्य कर्म दूत्यम् ‘भावकर्मणी’ ति यत् तस्य व्यापारो रचनाविशेषः तस्यपारङ्गमा तद्विषयनैपुण्यवती सा किं क्रियावतीत्याह तस्या इति । प्रथमोद्दिष्टत्वात् । संघट्टनमुदाहरति । अञ्चतीति । काचिद्दूती नायिकां प्रत्याह हे सखी एवं च हितोपदेशार्हत्वं द्योत्यते रजनी रात्रिः अञ्चति समायाति किञ्च तिमिरं तमिस्रं उदञ्चति प्रकटीभवति एवं च गमनयोग्यताऽगमने भयं दर्शयति मनोभूर्मदनः अनिवारणीयत्वं द्योत्यतेऽञ्चति हृष्यति विजयसाधनसिद्ध्यतिभावः । अगमने शितशरस्त्वां ताडयिष्यति अगमने प्रतिज्ञाहानिरूपं बाधकमाह उक्तं प्रतिज्ञातम् अर्थान्नायकसविधे गमनं न त्यज एवं च परित्यागादन्यत् किमपि बाधकं नास्तीति द्योत्यते । यत्कर्तव्यं तदाह तस्मिन्नायके मनः रक्तमनुरागि रचय इदं युक्तम् । उपगीतिवृत्तम् ॥ ९८ ॥

विरहनिवेदनमुदाहरति । चक्रइति । काचिद्दूती श्रीकृष्णं प्रत्याह भो कृष्ण चन्द्रमुखीं प्रकाशकारित्वं

तद्ब्रूमः शिरसा नतेन सहसा श्रीकृष्ण निक्षिप्यतां
स्नेहस्तत्र तथा यथा न भवति त्रैलोक्यमन्धंतमः ॥ ९९ ॥

शृंगारस्योभयनिरूप्यत्वान्नायकोपि निरूप्यते स च त्रिविधः पतिरुपपतिर्वैशेषिकश्चेति विधिवत्पाणिग्राहकः पतिर्यथा—

त्वं पीयूषमयूख मुञ्च शिशिरान् स्निग्धान् सुधाशीकरान्
त्वं भोगीन्द्र विलम्बसे किमु फणाभोगैः शनैर्वीजय ॥
त्वं स्वर्वाहिनि किञ्च सिञ्च सलिलैरङ्गैः शिरीषोपमैः
सेयं शैलसुता कठोरमहसः कान्त्या पथि क्लाम्यति ॥ १०० ॥

---

व्यज्यते । राधा गोपिका धरामण्डले प्रदीपकलिका चक्रे कृता धात्रा विधात्रा कर्मणि लिट् । किन्तावतेत्याह दैववशाददृष्टयोगात् एवं च तव नापराध इति व्यज्यते । तस्याः राधायाः चरमापि अंत्यापि दशावस्था प्रायो वाहुल्येन समुन्मीलति समुदेति तेन नम्रेण शिरसा प्रणामपुरःसरमित्यर्थः । वयं ब्रूमो विज्ञापयामः तत्किमित्यत आह श्रीकृष्णः सहसा शरत्कालेन वृष्टिरिवाकस्मिकइत्यर्थः । तत्र राधालक्षणदीपकलिकायां स्नेहः प्रेम निक्षिप्यतामासज्यताम् यथाऽदएत त्रैलोक्यम् चातुर्वर्ण्यादित्वात् यञ् । अन्धम् लावण्यसारसम् सारादर्शकं न भवति एवं च त्वत्कृपया विना राधारूपदीपनिर्वाणे सति न कोपि कुत्रापि सौन्दर्यं पश्येत् एवं च त्रिभुवनाभिरामा राधावश्यं त्वत्प्रसादं विना न जीविष्यतीति व्यज्यते । अन्यत्रापि दीपदशा निर्वाणं यान्ति स्नेहेन सहिता प्रकाशयतीति लौकिकम् । शार्दूलविक्रीडितम् वृत्तम् ॥ ९९ ॥

इति श्रीअनन्तपण्डितविरचितायाम् व्यंग्यार्थकौमुद्यां नायिकानिरूपणम् । शृङ्गारस्येति । उभयनिरूपणीयत्वात् नायिकानायकोभयनिरूपणाधी न निरूपकत्वादित्यर्थः तद्विभागमाह सचेत्यादि पतिं लक्षयति विधिवदिति पतिमुदाहरति । त्वं पीयूषेति । शिवोक्तिरियम् । हे पीयूषमयूख अमृतकिरण चंद्रशिशिरान् शीतलान् सिग्धान् सान्द्रान् सुधाशीकरान् अमृतलवान् मुञ्च अर्थाच्छैलसुताशरीरे हे भोगींद्र भुजगराज त्वं किमु विलंवसे फणाभोगैः फणाविस्तारैः शनैर्मन्दं वीजय व्यजनानिलम् संपादय भो स्वर्गवाहिनी स्वर्गंगे सलिलैः पथि मार्गे सिंच

अनुकूलदक्षिणधृष्टशठभेदात्पतिश्चतुर्द्धा। सार्वकालिकानां पराङ्मुखत्वे सति सर्वकालमनुरक्तोऽनुकूलः यथा—

पृथ्वि त्वं भव कोमला दिनमणे त्वं शैत्यमङ्गीकुरु
त्वं वर्त्मन् लघुतां प्रयाहि पवन त्वं खेदमुत्सारय॥
सान्निध्यं श्रय दण्डकावनगिरे निर्गच्छ मार्गाद्बहिः
सीतासौ विपिनं मया सह यतो निर्गन्तुमुत्कण्ठते॥ १०१॥

सकलनायिकाविषयकसमसहजानुरागोदक्षिणः यथा—

एतत्पुरः स्फुरति पद्मदृशां सहस्र-
मक्षिद्वयं कथय कुत्र निवेशयामि॥
इत्याकलय्य नयनाम्बुरुहे निमील्य
रोमाञ्चितेन वपुषा स्थितमच्युतेन॥ १०२॥

---

सेकं कुरु किमर्थमुपदेशइत्यत आह सेयं सकलजनविदितप्रभावा शैलसुता पर्वतपुत्री कठोरमहः चंडरश्मेः कान्त्या दीप्त्या क्लाम्यति ग्लायति ननु पर्वतपुत्र्याः कथं चंडरश्मिकान्त्या क्लान्तिरत आह शिरीषोपमैः शिरीषपत्रकोमलैः अङ्गैर्गात्रैः उपलक्षिता एवं च पर्वतपुत्रीत्वेन कठिनत्वं नाशङ्कयं। शार्दूलविक्रीडितं वृत्तम्॥ १००॥

पतिं विभजते अनुकूलेत्यादि तत्रानुकूलं लक्षयति सार्वकालिकेति आध्यात्मादित्वात् ठक् अनुकूलमुदाहरति। पृथ्वीति। विमलकमलदलाङ्ग्याः श्रमसंभावनया विपिनगमनावसरे श्रीरामः पृथ्व्यादीन् प्रार्थयते हे पृथ्वि त्वं कोमला भव एवं च पृथिव्यास्तु जननीत्वेपि स्वयं प्रार्थनाकरणेनातिशयितप्रेमावेद्यते किंच दिनमणे त्वं शैत्यं शीतलतामङ्गीकुरु हे वर्त्मन् मार्गलघुतामल्पतां प्रयाहि प्राप्नुहि हे पवन त्वं खेदं श्रमम् उत्सारय किंच दंडकावने दंडकवनगिरे दंडकारण्यसंबन्धि दण्डकया राक्षस्याधिष्ठितं दण्डकावनम् तत्संबोधनम् सांनिध्यं श्रय नैकट्यमङ्गीकुरु गिरेः पर्वतमार्गाद्बहिः दूरे निर्गच्छ केचित्तु दण्डकारण्यसंबन्धिपर्वतसान्निध्यं श्रय मार्गाद्बहिर्निर्गच्छेत्याहुः किमर्थमिदमतआह यतो हेतोः इयं सीता मया सह वनं गन्तुमुत्कण्ठते वाञ्छतीत्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ १०१॥

दक्षिणं लक्षयति। सकलेति। अशेषनायिकाविशेषान्यूनानधिकाकृत्रिमानुरागवत्वमित्यर्थः

भूयो निःशङ्ककृतदोषोपि भूयो निवारितोपि भूयः प्रश्रयपरायणो धृष्टः यथा—

बद्धो हारैः करकमलयोर्द्वारतो वारितोपि
स्वापं ज्ञात्वा पुनरुपगतो दूरतो दत्तदृष्टिः ॥
तल्पोपान्ते कनकवलयं मुक्तमन्वेषयन्त्या
दृष्टो धृष्टः पुनरपि मया पार्श्व एव प्रसुप्तः ॥ १०३ ॥

कामिनीविषयककपटपटुः शठो यथा—

मौलौ दाम विधाय भालफलके व्यालिख्य पत्रावलीं
केयूरं भुजयोर्निधाय कुचयोर्विन्यस्य मुक्तास्रजम् ॥

---

दक्षिणमुदाहरति । एतदिति । कृष्णोक्तिरितीयम् हे सखे पद्मदृशां कमलनयनानाम् एतत्सहस्रं पुरोग्रे स्फुरति सहस्रसंख्यकाः कामिन्यः पुरतः स्फुरन्तीत्यर्थः स्फुरतीत्यनेन कान्तिविशेषशालिता व्यज्यते अतोक्षिद्वयं नयनयुगलम् कुत्र निवशयामि इत्याकलय्य विचार्य कथय एवं च नायिकानां बहुलत्वात् नयनयोश्चाबहुत्वात् कथं निवेशनमिति भावः इत्युक्त्वा नयनाम्बुरुहे नयनकमले निमील्य वपुषा देहेन रोमाञ्चितेन संजातरोमोद्गमेन अच्युतेन स्थितम् । वसन्ततिलकावृत्तम् ॥ १०२ ॥

धृष्टं लक्षयति । भूय इत्यादि बहुतरनिर्भयापराधजनकत्वे सति बहुतरतिरस्कारागणकत्वे सति विनयपरायणत्वमित्यर्थः धृष्टमुदाहरति । बद्ध इति । काचिन्नायिका सखींप्रत्याह द्वारतो देहलीतः वारितोपि तिरस्कृतोपि अर्थात्परिजनैः किंच हारैः पुष्पमालाभिः करकमलयोर्हस्तपद्मयोर्बद्धोपि स्वापं निद्राम् अर्थान्मम ज्ञात्वा संभाव्य दूरतो व्यवहितप्रदेशात् दत्तदृष्टिः मदिङ्गितज्ञानायेतिभावः पुनरुपगतः पुनरागतः ततोपि तल्पान्ते शयनीयप्रान्ते मुक्तं स्थापितम् रात्रौ नालंकृतम् सुवर्णवलयं कनककटकम् अन्वेषयन्त्या मया पार्श्वपृष्ठभागे एकदा स्वापान्निवारितोपि सुप्त एव धृष्टो निःशङ्को दृष्टः । वसन्ततिलका वृत्तम् ॥ १०३ ॥

शठं लक्षयति कामिनीति सापराधत्वेपि वञ्चनानिपुणत्वमित्यर्थः। शठमुदाहरति । मौलाविति । मौलौ मस्तके दाममालां विधाय कृत्वा भालफलके कपोलतले पत्रावलीं मकरिकादिरचनां व्यालिख्य भुजयोः केयूरे भूषणे निधायाऽऽसज्ज्य कुचयोर्मुक्तास्रजं विन्यस्य मृगदृशोर्विश्वासं

विश्वासं समुपार्जयन्मृगदृशः काञ्चीनिवेशच्छलात्
नीवीग्रन्थिमपाकरोति मृदुना हस्तेन वामभ्रुवः ॥ १०४ ॥

आचारहानिहेतुः पतिरुपपतिः यथा—

शङ्काशृंखलितेन यत्र नयनप्रान्तेन न प्रेक्षते
केयूरध्वनिभूरिभीतिचकितं नो यत्र वाश्लिष्यते ॥
नो वा यत्र शनैरलग्नदशनं बिम्बाधरः पीयते
नो वा यत्र विधीयते च भणितं तत्किं रतं कामिनोः ॥ १०५ ॥

उपपतिरपि चतुर्धा परन्तु शठत्वं तत्र नियतम् अनियताः परे बहुल-वेश्योपभोगरसिको वैशेषिकः यथा—

काञ्चीकलक्कणितकोमलनाभिकान्ति
पारावतध्वनितचित्रितकण्ठपालिम् ॥

---

समुपार्जयन्नुत्पादयन् काञ्चीनिवेशच्छलात् रशनास्थापनाव्याजात् मृदुना हस्तेन शनैरित्यर्थः वामभ्रुवः कुटिलभ्रुवः एवं च वञ्चनायोग्यत्वं नीवीग्रन्थिमपाकरोति रिरंसयेति भावः। शठत्वं स्फुटमेव। शार्दूलविक्रीडितं वृत्तम् ॥ १०४ ॥

उपपतिं लक्षयति। आचारेति तमुदाहरति। शङ्केत्यादि। शंकाशृंखलितेन शंकया भयेन शृंखलितं निबद्धं तेन नयनप्रान्तेन नेत्रप्रांतेन प्रेक्षते शृंखलितपदेन प्रसरणाभावो द्योत्यते यत्र वा केयूरध्वनिभूरि-ीतिचकितम् केयूरं बाहुभूषणम् तस्य ध्वनिर्निनादः तेन भूरिभीतिः बहुतरभयं तेन चकितं निश्चलं न श्लिष्यते नालिङ्ग्यते यत्र वा अलग्नदशनं दन्तसंबन्धं विनादन्तक्षते कैश्चिद्विज्ञातव्यमेतदिति भावः अत एव शनैर्मन्दं बिम्बाधरो बिम्बतुल्याधरोष्ठः न पीयते यत्रै-तादृशं चुम्बनमित्यर्थः यत्र वा भणितं रतिकूजितं न विधीयते न श्रुतिविषयीक्रियते सर्व-मेतत्प्रच्छन्नकामित्वात् कामिनोः स्त्रीपुंसोः तत्किं रतम् तत्किंसंभोगः यत्रैतादृशचेष्टिताभवदित्यर्थः आचारविनाशकत्वं स्फुटमेव। शार्दूलविक्रीडितं वृत्तम् ॥ १०५ ॥

उपपतिरप्युक्तभेदैरनेकविध इत्याह। उपपतिरपीति। अनुकूलादिभेदेनेत्यर्थः वैशेषिकं लक्षयति बहुलेत्यादि वैशेषिकमुदाहरति। काञ्चीति। कोपि नायकोनिर्वचनीयगुणस्तादृशं सखायं प्रत्याह।

उद्भ्रान्तलोचनचकोरमनङ्गरङ्ग—
माशास्महे कमपि वारविलासवत्याः ॥ १०६ ॥

वैशेषिकस्तूत्तममध्यमाधमभेदात्रिधा दयिताया भूयः प्रकोप्युपचारपरायण

उत्तमः यथा—

चक्षुष्प्रान्तमुदीक्ष्य पक्ष्मलदृशः शोणारविन्दश्रियं
नोच्चैर्जल्पति न स्मितं वितनुते गृह्णाति वीटीं न वा ॥
तल्पोपान्तमुपेत्य किन्तु पुलकभ्राजत्कपोलद्युतिः
कान्तः केवलमानतेन शिरसा मुक्तास्रजं गुंफति ॥ १०७ ॥

---

हे सखे काञ्चीकलक्वणितकोमलनाभिकान्तिम् काञ्च्या रशनायाः कलं पारावतानां मधुरास्फुटं तादृशं क्वणितं सिञ्जितं यस्मिन् स चासौ कोमलोऽभिनवो यो नाभिस्तस्य कान्तिर्लावण्यं यस्मिन् सः तम् । पारावतध्वनितचित्रितकण्ठपालिम् पारावतानां गृहकपोतानां यद्ध्वनितं शब्दितं तद्वद्विचित्रिता नानाविधा कण्ठपाली यत्र स तम् । विविधभणितचातुर्यादिति भावः पालीपदं रमणीयतां गमयति । उद्भ्रान्तलोचनचकोरम् । उद्भ्रान्तौ मुखचन्द्रचन्द्रिकापानार्थं चञ्चलौ लोचनचकोरौ यस्मिन् स तम् । उद्भ्रान्तपदं लज्जाभावं व्यञ्जयति एतादृशं वारविलासवत्याः वाराङ्गनायाः कमपि अभिरूप्यम् अनङ्गरङ्गं कामक्रीडाप्रसङ्गमाशास्महे स एवास्माकमस्त्विति सम्भावयामः । वसन्ततिलकावृत्तम् ॥ १०६ ॥

वैशेषिकं विभजते उत्तममुदाहरति । चक्षुष्प्रान्तमिति । काचिदाह पक्ष्मलदृशः प्रशस्तानि पक्ष्माणि यस्य तादृशी दृग्यस्या नायिकायाः चक्षुष्प्रान्तं नयनकोणम् शोणारविन्दश्रियम् रक्तोत्पलप्रायम् कोपवशादिति भावः उद्वीक्ष्य विलोक्य उच्चैर्न जल्पति शनैरेव वदतीति भावः किञ्च स्मितं हसितम् नतु हसितानि न वितनुते किञ्च वीटीं ताम्बूलपर्णावलीम् न गृह्णाति किन्तु तल्पोपान्तं शयनीयसमीपदेशमुपेत्य पुलकभ्राजत्कपोलद्युतिः पुलकै रोमाञ्चैः शयनसमीपदेशप्राप्तिजन्यहर्षोदयादितिभावः भ्राजन्ति विलसन्ति कपोलद्युतिर्गण्डलावण्यम् यस्य सः कान्तः केवलमेव आनतेन नम्रेण भयाच्चिन्तया चेतिभावः शिरसा मस्तकेन उपलक्षितः मुक्तास्रजं गुम्फति तत्प्रीतय इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १०७ ॥

प्रियायाः प्रकोपमनुरागं वा न प्रकटयति चेष्टया भयं गृह्णाति स मध्यमः यथा—

आस्यं यद्यपि हास्यवर्जितमिदं लास्येन वीतं वचो
नेत्रं शोणसरोजकान्ति तदपि क्वापि क्षणं स्थीयताम् ॥
मालायाः करणोद्यमो मकरिकारम्भः कुचाम्भोजयो-
र्धूपः कुंतलधोरणीषु सुदृशः सायन्तनो दृश्यते ॥ १०८ ॥

भयकृपालज्जाशून्यः कामक्रीडायामकृतकृत्याकृत्याविचारोऽधमः —

उदयति हृदि यस्य नैव लज्जा
न च करुणा न च कोपि भीतिलेशः ॥
बकुलमुकुलकोषकोमलाभां
पुनरपि तस्य करे न यातयेथाः ॥ १०९ ॥

---

मध्यममुदाहरति । आस्यमिति । कश्चित्सखायम् वक्ति यद्यपीदम् आस्यं मुखम् हास्यवर्जितं स्मितरहितं तथापि वचो लास्येन गीतादिना वीतं रहितम् तथा नेत्रं शोणसरोजकान्ति कोकनदद्युति कोपवशात् तदपि तथापि एतन्नयनाविषयीभूते प्रदेशे क्षणं स्थीयताम् एवं च मनोभावग्राहकत्वं व्यज्यते अवस्थितेः फलमाह सुदृशः मालायाः स्रजः करणोद्यमः कृतोत्साहः कुचाम्भोजयोः स्तनकमलयोः मकरिकारम्भो रचनाविशेषः कुन्तलधोरणीषु केशसंघातेषु सायम्भवः सायन्तनः इदं प्रागप्यन्वेति सुगन्धद्रव्येणाधिवासः दृश्यते एवं चैतादृशसामग्रीसत्वात् अग्रे किं भावि द्रष्टव्यमिति मनोभावग्राहकं द्योत्यते । शार्दूलविक्रीडितं वृत्तम् ॥ १०८ ॥

अधममुदाहरति । उदयतीति । काचित्सखीमाह हे सखी यस्य हृदि कापि किञ्चिद्विषयिण्यपि लज्जा व्रीडा नोदयति नोद्गच्छति यस्य करुणा दयापि न कोपि भीतिलेशः अयतेरात्मनेपदमनित्यमतो बकुलमुकुलकोषकोमलाभाम् बकुलानाम् मुकुलास्त एव कोषाः सर्वसौगंध्यनिधानत्वात् तद्वत्कोमलाभाम् पुनरपि तस्य करे हस्तेन यातयेथाः क्रीडाया असह्यत्वादिति भावः । पुष्पिताग्रावृत्तम् ॥ १०९ ॥

वा चतुरश्च शठान्तर्भूतोनखतन्त्रभेदवान् मानी यथा—

वाह्याकूतपरायणं तव वचो वज्रोपमेयं मनः
श्रुत्वा वाचमिमामपास्यविनयं व्याजाद्बहिः प्रस्थिते ॥
प्रातर्वीनविलोकने परिहृतालापे विवृत्तानने
प्राणेशे निपतंति हन्त करुणा वामभ्रुवो दृष्टयः ॥ ११० ॥

वचनचेष्टाव्यंग्यसमागमश्चतुरः वचनव्यंग्यसमागमो यथा—

तमो जटाले हरिदन्तराले काले निशायास्तव निर्गतायाः ॥
तटे नदीनां निकटे वनानां घटेत शातोदरि कः सहायः ॥ १११ ॥

---

ननु मानी चतुरश्चान्योस्ति स कांतर्भूत अत आह शठे एव न स्वतंत्रभेद इत्यर्थः । मानिनमुदाहरति । वाह्याकूतेति । काचित्कांचिदाह हे कांत तव यत् प्रातःकालीनमहमधुनैवागमिष्यामीतिवचो वचनम् वाह्याकूतपरायणं वाह्यं वहिर्भवं यत् आकूतं आशयस्तत्परायणं तत्प्रधानम् तथाविधकार्यादर्शनात् आंतरंतु अन्यादृशम् यतः वज्रोपमेयम् वज्रतुल्यं कठिनम् तव मनः एवं च वागपरपीडाज्ञानविधुरं तस्याप्यधुनैवागमिष्यामीति प्रातःकालीनवचनवत् इदानींतनमपि तव वचनमलीकमेवेति व्यज्यते इमां वाचं श्रुत्वा अर्थान्नायिकायाः विनयं तत्सांत्वनम् अपास्य परित्यज्य व्याजात् कपटात् एवं च शठत्वम् वहिः केलिसदनात् परीहृतालापे विवृतानने प्राणेशे प्रस्थिते गंतुमुद्यते सति वामभ्रुवः सुंदरभ्रुवः कृपणा दीनाः विरहकातरतयेति भावः दृष्टयः कटाक्षाः निपतंति । शार्दूलविक्रीडितं वृत्तम् ॥ ११० ॥

प्रथमोद्दिष्टत्वाद्वचनव्यंग्यसमागमचतुरमुदाहरति । तमोजटालइति । कोपि नायिकांव क्ति हे शातोदरि एवंचाऽसहायतेर्ह्यागमनमसंभावीति व्यज्यते निशाया रात्रेःकाले समये तमोजटाले तमोजटास्तमस्तोमा यस्मिन् प्राणिस्थादातोलजन्यतरस्यामिति लच हरिदंतराले हरितांदिशामंतरालमभ्यंतरं तस्मिन् आशाश्च हरिताश्च ताः अभ्यंतरंत्वंतरालमित्यमरः निर्गतायाः प्रचलितायाः तव वनानां निकटे सविधे नदीनां तटे तीरे सहायः सहचरः को घटेत भवेत् अहमेव सहचरो भवामीति व्यज्यते । उपजातिर्वृत्तम् ॥ १११ ॥

चेष्टाव्यंग्यसमागमो यथा—

कान्ते कनकजम्बीरं करे किमपि कुर्वति ॥
आगारलिखिते भानौ बिन्दुमिन्दुमुखी दधौ ॥ ११२ ॥

प्रोषितः पतिरुपपतिर्वैशेषिकश्च भवति प्रोषितोपपतिः प्रोषितवैशेषिकेति त्रयम् क्रमेणोदाहरणानि——

ऊरूरम्भादृगपिकमलं शैवलं केशपाशो
वक्त्रं चन्द्रो लपितममृतं मध्यदेशो मृणालम् ॥
नाभिः कूपोवलिरपि सरित्पल्लवः किंच पाणि-
र्यस्याः सा चेदुरसि न कथं हन्त तापस्य शान्तिः ॥ ११३ ॥

---

चेष्टाव्यंग्यसमागमं चतुरमुदाहरति। कांत इति। काचित्कांचिदाह कांते कमनीयरूपशालिनि नायके किमपि अनिर्वचनीयशोभाशालि कनकजंबीरं सुवर्णफलविशेषम् करे हस्ते कुर्वति गृह्णाति एवं स्तनसदृशकनकजंबीरं करग्रहणरूपचेष्टयात्वत्कुचमर्दननिदानरतिं कदा प्राप्स्यामीति व्यज्यते इंदुमुखी चंद्रवदना नायिका तदभिप्रायविज्ञेतिभावः इंदुमुखीपदेन हर्षोत्कर्षो गम्यते आगारलिखिते गृहभित्तिनिर्मिते एवं च संकेतदाने सुभगत्वमावेद्यते भानौ सूर्ये बिंदुं शून्यम् अदर्शकमित्यर्थः दधौ धत्तवती एवं सूर्यास्ते तव रतिं दास्ये इति व्यज्यते यद्वा कलंकज्ञापकमिति भावः चंद्रोदये तव रतिं दास्ये इति व्यज्यते। पथ्यावक्त्रम् ॥ ११२ ॥

प्रसंगादन्यदप्याह प्रोषित इति पतिरुपपतिर्वैशेषिकश्च त्रयः प्रोषिता भवंतीत्यर्थः प्रोषितपतिमुदाहरति। ऊरूरंभेति। कोपि विरही वक्ति यस्या नायिकायाः केशपाशशैवालमेव शैवालपदं श्यामतामपि ध्वनयति वक्त्रं चंद्र एव लपितं वचनममृतमेव दृगपि च कमलम् नीरजमेव पाणिः पल्लवएव पल्लवपदमरुणतां व्यंजयति वलिरपि सरिदिव सरित्पदं कामिदृष्टिर्दुर्लंघ्यत्वमावदेयति नाभिः कूप एव कूपपदं गंभीरत्वं ध्वनयति कामिमनसो निर्गमनायोग्यतां व्यनक्ति मध्यदेशो मृणालमेव मृणालपदं सूक्ष्मत्वमभिव्यंजयति सा चेत् यदि उरसि वक्षसि तदा तापस्य अर्थाद्विरहस्य शांतिर्विनाशः हंतेति हर्षे कथं न भविष्यति अपि तु भविष्यत्येव एवं च यत्रेदमेकैकमपि तापापनोदकं तत्र किमु वाच्यं समुदितमिति भावः। मंदाक्रांतावृत्तम् ॥ ११३ ॥

यान्त्याः सरः सलिलकेलिकुतूहलाय
व्याजादुपेत्य मयि वर्त्मनि वर्तमाने ॥
अन्तः स्मितद्युतिचमत्कृतिदृक्कृतरङ्गै-
रङ्गीकृतं किमपि वामदृशः स्मरामि ॥ ११४ ॥

अधृतपरिपतन्निचोलबन्धं
मुषितनकारमवक्रदृष्टिपातम् ॥
प्रकटहसितमुन्नतास्यविम्बं
पुरसुदृशः स्मरचेष्टितं स्मरामि ॥ ११५ ॥

अनभिज्ञो नायको नायकाभास एव यथा—

शून्ये सद्मनि योजिता बहुविधा भङ्गी वनं निर्जनं
पुष्पव्याजमुपेत्य निर्गतमथस्फारीकृता दृष्टयः ॥

---

प्रोषितमुपपतिमुदाहरति। यान्त्या इति। वर्त्मनि मार्गे व्याजात् कपटात् एवं च प्रच्छन्नकामुकत्वं व्यज्यते उपेत्यागत्य वर्तमाने अन्तःस्मितद्युति अन्तर्गूढं हास्यं कान्तिर्यत्र क्रियायाम्। चमत्कृतदृक्तरङ्गैः मनोहारिदृग्विभ्रमैः किमपि केनचित्प्रकारेण एवञ्चान्यजनाज्ञेयत्वं द्योत्यते अङ्गीकृतं संकेतचेष्टितमिति स्मरामि चिन्तयामि अत्रोपपतित्वं प्रोषितत्वं स्फुटमेव। वसंततिलका वृत्तम् ॥ ११४ ॥

प्रोषितं वैशेषिकमुदाहरति। अधृतेति। कश्चित्कंचिदाह अधृतः अनवलम्बितः अतएव परिपतन् विस्रंसन् निचोलस्य वसनस्य बन्धो यत्र क्रियायाम् मुषितनकारम् मुषितश्चोरितः परिहृतो वा नकारो ननेति वचनम् यत्र अवक्रदृष्टियातम् अकुटिलः कटाक्षो यत्र सर्वदाप्रसन्नत्वात् तथा प्रकटं हसितम् प्रकटं स्फुटं हसितं यत्र उन्नतास्यविंबम् उन्नतं नम्रताहीनमास्यविम्बं यत्र तादृशं स्मरचेष्टितं कामविलसितं स्मरामि ध्यायामि एवं च स्वीयादिवैलक्षण्यादिदमेव चिन्तयामि नान्यदिति भावः। पुष्पिताग्रावृत्तम् ॥ ११५ ॥

प्रसंगान्नायकाभासं लक्षयति। अनभिज्ञ इति। अनभिज्ञः संकेतचेष्टितज्ञानविकलः अत एव नायकाभासः तद्वदाभासो न तु स इत्यर्थः समुदाहरति। शून्यइति। कापि दूतीं वक्ति शून्ये जनसञ्चारविरहिणि सद्मनि गेहे वहुविधा अनेकप्रकाराः भङ्गी विभ्रमरचनाः योजिताः पुष्पव्याजं पुष्पावचयच्छलम् उपेत्य पुष्पावचयच्छलेनेत्यर्थः वनमरण्यं निर्जनं जनरहितं निर्गतं चलितम् शून्यनिर्जनपदाभ्यां लज्जानर्हत्वमावेद्यते अतोप्यनन्तरं दृष्टयः कटाक्षाः विस्फारिताः विस्फारीकृताः

ताम्बूलाहरणच्छलेन विहितौ व्यक्तौ च वक्षोरुहा-
वेत्ते नापि न वेत्ति दूति कियता यत्नेन स ज्ञास्यति ॥ ११६ ॥

नच नायिकाया इव नायकस्यापि ते ते भेदा सन्त्विति वाच्यम् तस्या अवस्थाभेदेन भेदात्तस्य च स्वभावेन भेद इति विशेषात् अनुकूलत्वं दक्षिणत्वं धृष्टत्वं शठत्वमिति चत्वार एव नायकस्य स्वभावा इति अन्यच्चावस्थाभेदेन यदि भेदो नायकस्य स्यात्तदोक्तविप्रलब्धखण्डितादयो नायका अपि स्वीकर्तव्याः तथा च सङ्केतव्यवस्थायां स्त्रीणां गमने वा सम्प्रदायादन्यसमागमशङ्का धूर्तत्वं वान्यसम्भोगचिह्नितत्वं नायिकानां न तु नायकानाम् तान् प्रति तदुद्भावने रसाभासापत्तिरिति तेषां नर्म सचिवपीठमर्दविटचेटकविदूषकभेदाच्चतुर्धा कूपितस्त्रीप्रसाधकः पीठमर्दः यथा—

कोयं कोपविधिः प्रयच्छ करुणागर्भं वचो जायतां
पीयूषद्रवदीर्घिकापरिमलैरामोदिनी मेदिनी ॥

---

किंच अद्यापि तूष्णीमेवायमित्यावेशवशादिति भावः ताम्बूलाहरणच्छलेन ताम्बूलदानव्याजेन वक्षोरुहौ स्तनौ व्यक्तौ प्रकटौ विहितौ हे दूति एतेनापिशून्यसदनपरिहासविपिननिवासकटाक्षविक्षेपविलासस्तनकलशागोपननिरासाद्यभिप्रायप्रकाशकसाहसेनापीत्यर्थः स नायकः एवं च नामाऽनभिधानेन दुःखविशेषो द्योत्यते यदि न वेत्ति नजानाति तर्हि कियता प्रयत्नेन ज्ञास्यति एवं चैतदस्मादन्यज्ज्ञापकं नास्तीत्यर्थः। एवं तदा कश्चिन्मदभिप्रायवेदी आनेय इति व्यज्यते। शार्दूलविक्रीडितं वृत्तम् ॥ ११६ ॥

ननूक्तादयो भेदाः कथं न नायकस्यैत्यतआह न चेति उत्तरयति तस्या नायिकायाः अवस्थाभेदेन कालकृतविशेषेण तस्य नायकस्य स्वभावभेदेन प्रकृतिभेदेन स्वभावमेव विवृणोति अनुकूलत्वमित्यादिना। अयमर्थः नायकस्याऽप्युक्तादिभेदयुक्तेः तुल्यत्वपंक्तिकतया खंडितादिभेदवत्वे अनौचित्या पत्यारसभङ्गापत्तेः प्रसंगात् तत्सहायानाह तेषामिति। नर्मसचिवः नर्मणानुकूलव्यापारेण सचति समवैति सचिवः सहाय इत्यर्थः। तत्रपीठमर्दमुदाहरति। कोयमिति। हे सुंदरि अयमेतादृशः कः कोपविधिः कोपाङ्गीकारः आत्मन

आस्तां वा स्पृहयालु लोचनमिदं व्यावर्तयन्ती मुहु-
र्यस्मै कुप्यसि तस्य सुन्दरि तपोवृन्दानि वन्दामहे ॥ ११७ ॥

कामतन्त्रकलाकोविदो विटः यथा—

आयातः कुमुदेश्वरो विजयते सर्वेश्वरो मारुतो
भृङ्गः स्फूर्जति भैरवो न निकटं प्राणेश्वरो मुञ्चति ॥
एते सिद्धरसाः प्रसूनविशिखो वैद्योनवद्योत्सवो
मानव्याधिरसौ कृशोदरि कथं त्वच्चेतसि स्थास्यति ॥ ११८ ॥

---

उचितकारित्वात् हेय इति भावः किंतु करुणागर्भम् करुणादयो गर्भो मध्ये यस्य एतादृशं कोप-परित्यागादिति भावः आगमिष्यामि तमानयेत्यादि रूपं वा वचनं प्रयच्छ देहि अन्यच्चपीयूष-द्रवदीर्घिका परिमलैः अमृतसारवापीसंघट्टनैः मेदिनी भूः एवं च नाहं स्वसखाय कार्यार्थसम्भ्य-र्थय इति भावः एवं च त्वदप्रसन्नतायां मन्मित्रस्य दुःखवत्वेन जगदपि दुःखीति व्यज्यते आमोदिनी वरसंतोषवती आस्तां भवतु अथवा आस्तां तिष्ठतु कोप इति भावः स्पृहयालु तदपि च दर्शनौत्सुक्यमिदं प्रत्यक्षदृश्यमानचिह्नं लोचनम् अत एव मुहुर्वारंवारम् । व्यावर्तयंती परावर्तयती यस्मै कुप्यसि तस्य तपोवृंदानि वन्दामहे नमस्करोमि एवं च नायकं प्रति यत्र तव कोपोपि पुण्योद्रेकाद्भवति तत्र तव प्रमादस्य का वार्तेति व्यज्यते। शार्दूलविक्रीडितं वृत्तम् ॥ ११७ ॥

विटं लक्षयति कामतंत्रेति तंत्रं प्रधाने सिद्धांत इति विश्वः । तमुदाहरति । आयातइति । हे कृशोदरि एवं च मानस्यस्थित्यभावः कुमुदेश्वरश्चन्द्रः आयातः प्राप्तः सोप्युदित इत्यर्थः । सर्वेश्वरः प्राणरूपत्वात् यद्वा ईश्वरो नियोजकः शीतमन्दसुरभित्वेन वशीकर्तृत्वात् मारुतो वायुर्विजयते भैरवो दारुणः विरहिपीडाप्रदत्वात् भृङ्गो भ्रमरः स्फूर्जति विलसति प्राणेश्वरो नायकः निकटं सविधं न मुञ्चति न त्यज्यति सर्वदा निकटएवेतिभावः । एतावताकिमित्यतआह एते चन्द्रादयः सिद्धरसाः सिद्धो निष्पन्नो रसः शृङ्गारो यैस्ते उद्दीपनालम्बनविभावना इत्यर्थः । अनवद्योत्सवः अनवद्योऽनिन्द्यः महानितियावत् उत्सवः कार्यसमारम्भो यस्य एतादृशः प्रसून-विशिखः कुसुमवाणः वैद्यः एवंसति असौ मानव्याधिः सन्तापकत्त्वादिति भावः त्वच्चेतसि त्वन्मनसि कथं केनोपायेन स्थास्यति असाविति पदं स्फुटतया झटिति वैद्यप्रतीति विषयत्त्वं

सन्धानचतुरश्चेटकः —

सा चन्द्रसुन्दरमुखी स च नन्दसूनु-
र्दैवान्निकुञ्जभवनं समुपाजगाम ॥
अत्रान्तरे सहचरस्तरणौ कठोरे
पानीयपानकपटे न सरः प्रतस्थे ॥ ११९ ॥

अङ्गादिवैकृत्यैर्हास्यकारी विदूषकः यथा—

आनीय नीरजमुखीं शयनोपकण्ठ-
मुत्कण्ठितोस्मि कुचकंचुकमोचनाय ॥
अत्रान्तरे मुहुरकारि विदूषकेण
प्रातस्तनस्तरुणकुक्कुटकण्ठनादः ॥ १२० ॥

---

तेन च प्रतीकारयोग्यत्वं व्यनक्ति अथ च कुमुदेश्वरप्राणेश्वरभैरवसिद्धरसानां सिद्धत्वेऽप्रतिहतोपक्रमे अमृतहस्ते चिकित्सके चिकित्सति व्याधिर्न स्थातुमर्हतीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ११८ ॥

चेटकं लक्षयति संधानेति सन्धाने संयोजने तमुदाहरति। सेति। कश्चित्कंचिदाह सा प्रसिद्धलावण्यादिगुणा चंद्रसदृशमुखी चंद्राधिकवदना नायिका स प्रसिद्धसर्वविभवः नंदसूनुः नन्दस्यानन्दनजनकस्य सूनुः एवंच पितृगुणत्वेनानन्दजनकत्वस्यावश्यकत्वमावेद्यते दैवादसंकेतात् निकुञ्जभवनं कुञ्जगृहम् समुपाजगाम अत्रान्तरे एकत्र मिलनकाले सहचरो वयस्यः अर्थादत्रसुतः तरणौ सूर्ये कठोरे तीव्रे सति एवं च पानीयस्पृहायोग्यत्वं व्यज्यते पानीयपानकपटे नाम्बुपानच्छलेन सरः प्रतस्थे चचाल आत्मानं तत्संयोगान्तराय मन्वानस्तृषितोस्मीति सरोवरं जगाम। वसंततिलकावृत्तम् ॥ ११९ ॥

विदूषकमुदाहरति। आनीयेति। नायकः कंचिदाह नीरजनमुखीं कमलवदनाम् शयनोपकण्ठं तल्पसमीपं आनीय प्रापय्य कुचकंचुकमोचनाय यावदुत्कण्ठितोस्मि अत्रान्तरे एतन्मध्ये विदूषकेण प्रातस्तनः प्रातःकालीनः तरुणकुक्कुटकण्ठनादः तरुणताम्रचूडकण्ठध्वनिः मुहुर्वारं वारम् अकारि कृतः तरुणपदं स्वरदैर्घ्यमावेदयति तच्च सर्वश्रुतिविषयत्वं विदूषकत्वं स्फुटमेव। वसंततिलका वृत्तम् ॥ १२० ॥

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोथ वेपथुः
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्विका गुणाः ॥

यथा—

भेदो वाचि दृशोर्जलं कुचतटे स्वेदः प्रकम्पोऽधरे
पाण्डुर्गण्डतटी वपुः पुलकितं लीनं मनस्तिष्ठति ।
आलस्यं नयनश्रियश्चरणयोः स्तम्भः समुज्जृम्भते
तत्किं राजपथे निजामधरणीपालोयमालोकितः ॥ १२१ ॥

रतिस्थायीभावः शृङ्गारः । स च द्विविधः सम्भोगो विप्रलम्भश्च

सम्भोगो यथा—

वियति विलोलति जलदः स्खलति विधुश्चलति कूजति कपोतः ॥
निष्पतति तारकाततिरान्दोलति वीचिरमरवाहिन्याः ॥ १२२ ॥

---

साधननिरूपणमन्तरा साध्यनिरूपणासंभवात् शृंङ्गारं निरूपयितुं निरूपितविभावादिप्रसंगान् सात्विकानाह । स्तम्भः स्वेद इति । विस्तरभयात्तल्लक्षणप्रत्येकोदाहरणान्यनभिधाय सर्वानप्येकपद्येनोदाहरति । भेदोवार्चाति । काचित्कांचित्प्रत्याह हे सखि वाचि वचने भेदः स्वरभंगः दृशोर्नेत्रयोर्जलमश्रु कुचतटे स्वेदः अधरे ओष्ठे प्रकंपो वेपथुः चुंबनलालसत्वादिति भावः गंडतटी पांडुः पांडुरा विरहवशादितिभावः एवं चवैवर्ण्यमभिव्यज्यते वपुः शरीरम् पुलकितं रोमांचितम् मनश्चेतः लीनम् एवं च बाह्यज्ञानशून्यतामावेद्यते नयनश्रियाः नेत्रलक्ष्म्याः आलस्यं नेत्रमप्यलसितम् किं पुनरङ्गानीति भावः चरणयोः स्तंभो गतिनिरोधः समुज्जृंभते विलसतीत्यर्थः तत्किं तर्हि किं राजपथे राजमार्गे अनया निजामधरणीपालः निजामाख्यो देवगिरिराजा आलोकितो दृष्टः यद्वा निजानाऽऽत्मीयान्नमति प्राप्नोतीति निजामः स चासौ धरणीपालः दुःसहदानवादिविदारकत्वादिति भावः एतादृशः श्रीकृष्ण इत्यर्थः एवं चैवंविधगुणनिदर्शनमंतरा कथमेतादृश्यवस्थेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १२१ ॥

शृंगारं लक्षयति । रतीति । संगमेच्छाभिलाषरूपा रतिः तत्र चित्तवृत्तीनामाशुविभाशित्वेपि वासनात्मतया सूक्ष्मरूपतया वावस्थानात्स्थायित्वम् अत्रेदं बोध्यम् आनंदरूपतया प्रकाशमानं रत्यवच्छिन्नंचैतन्यं शृंगारः आवरणं वाज्ञानमेव शृंगारं विभजते स चेति द्विविध इति उभ-

विप्रलम्भो यथा—

प्रादुर्भूते नवजलधरे त्वत्पथं द्रष्टुकामाः
प्राणाः पङ्केरुहदलदृशः कण्ठदेशं प्रयान्ति ॥
अन्यत्किं वा तव मुखविधुं द्रष्टुमुड्डीय गन्तुं
वक्षः पक्षं सृजति बिसिनीपल्लवस्यच्छलेन ॥ १२३ ॥

---

स्यैव रतिप्रकृतिकत्वात् तदुक्तम् " अनुकूले निषेवेते यत्रान्योन्यं विलासिनौ । दर्शनस्पर्शनादीनि संभोगोऽयमुदाहृतः ॥ भावो यदा रतिर्नामप्रकर्षमधिगच्छति । नाधिगच्छति चाभीष्टं विप्रलंभस्तदोच्यत " इति ॥ तत्रसंभोगमुदाहरति । वियतीति । काचित्कस्याश्चिद्विपरीतरतं कांचित्प्रत्याह वियत्यंतरिक्षे जलदः केशपाशः जलदपदं केशकलापं लक्षयन् श्यामतां विरहतापोपशांतिं स्वेदजलवत्वं वा व्यंजयति विलोलति चंचलो भवति एवं च विपरीतरते केशकलापस्य शय्याद्याधारवत्तया नांतरिक्षस्थितिरिति विपरीतरतमावेद्यते तथा विधुर्मुखचंद्रः विधुपदं मुखं लक्षयन् सुधारूपत्वमभिव्यञ्जयति चलति चेष्टते चुंबनौत्सुक्यादिति भावः स्खलति च क्रियासु संकुचति लज्जाप्रदर्शनव्याजादानंदाद्वेति भावः तथा कपोतः कंठ कपोतपदं कंठे लक्षयन् ध्वनौ माधुर्यमभिव्यनक्ति कूजति शब्दायते एवं च भणितमभिव्यज्यते तारकाततिर्मुक्ताकलापः कुसुमोच्चयो वा तारकापदं मुक्तां कुसुमं वा लक्षयन् वर्तुलत्वोज्ज्वलत्वे व्यंजयति कंठं निष्पतति कंठात्केशकलापाद्वा रतौद्धत्येन हारत्रुटनात् तेनैव केशकलापविस्रंसनाद्वेति भावः तथामरवाहिन्यावीचिः वीचिपदं त्रिवलीं लक्षयन् श्रमस्वेदजलसंभृतत्वं व्यनक्ति तच्च रतप्रकर्षम् अमरवाहिनीपदोपादानं नायिकायां सरसत्वं विरहतापोपशांतिप्रवणत्वं त्रिवल्यामुपरिवर्तमानत्वं वा व्यंजयति वस्तुतस्तु अमरवाहिन्याः वीचिः हारइत्यर्थः आंदोलति चांचल्यं प्राप्नोति विपरीतरतादिति भावः । गीतिर्वृत्तम् ॥ १२२ ॥

विप्रलंभमुदाहरति । प्रादुर्भूतइति । काचित्सखी नायकं प्रत्याह संबुद्धिपदानुपादानं क्लेशमावेदयति नवजलधरेऽभिनवमेघे प्रादुर्भूते जलधरपदमुद्दीपकत्वं प्रादुर्भूतपदं चिरकालावस्थायित्वम् वहुतरदुःखप्रदत्वं च ध्वनयति त्वत्पथं द्रष्टुकामाः त्वदागमनमार्गदर्शनवांछावंतः पंकेरुहदृशः सरोजपत्रनेत्रायाः पंकेरुहपदे नेत्रमालिन्यमभिव्यनक्ति

विप्रलम्भे चाभिलाषचिन्तास्मृतिगुणकीर्तनोद्वेगप्रलापोन्मादव्याधिजडतानिधनानि दशावस्था भवन्ति तत्र सङ्गमेच्छाऽभिलाषः यथा—

तस्यां सुतनुसरस्यां चेतो नयनं च निष्पतितम् ॥
चेतो गुरु तु निमग्नं लघु नयनं सर्वतो भ्रमति ॥ १२४ ॥

सन्दर्शनसन्तोषयोः प्रकारजिज्ञासाचिन्तनम् यथा—

मया विधेयो मुहुरद्य तस्मिन्
कुञ्जोपकण्ठे कलकण्ठनादः ॥
राधा मधोर्विभ्रममावहन्तीं
कुर्वीत नेत्रोत्पलतोरणानि ॥ १२५ ॥

---

प्राणाः कंठदेशं प्रयांति एवञ्च प्राणोत्क्रमणकाल एवायमिति व्यज्यते अन्यत्किं वा तव मुखविधुम् त्वद्वदनचन्द्रम् द्रष्टुम् अतएव उड्डीय गन्तुम् वक्षो वक्षस्थलम् विसिनीपल्लवस्यच्छलेन तापापनोदार्थमिति भावः छलेन व्याजेन पक्षं सृजति विरहदुःखाप्ततयाऽसूनां बहिष्प्रयाणे नायकमार्गदर्शनसम्भावनएव तापापनोदकतया विसिनीपल्लवानां वक्षःसंयोगे पक्षसृजनसम्भावना भवति । मन्दाक्रान्ता वृत्तम् ॥ १२३ ॥

विप्रलम्भकदशावस्थां निरूपयितुं तद्विभागमाह । विप्रलम्भे चेति । प्रथमोद्दिष्टत्वादभिलाषं लक्षयति तत्रेति तमुदाहरति । तस्यामिति । कोपि पूर्वानुरागी वक्ति तस्यां सुतनुसरस्यां सुतनुरेव सरसी सरसत्वात् चेतो मानसम् नयनं नेत्रं अर्थात्स्वीयम् निष्पतितं चक्षुः सर्वतो भ्रमति यथालघु एवं च मच्चेतस्तस्यां निमग्नं यतो गुरु श्रेष्ठत्वात् गुणाभिज्ञत्वं नच निमग्नत्वं युक्तं नयनं सर्वतो भ्रमति यतो लघु एवं च मच्चेतस्तस्यामेव लीनं नयनमपि तामेवावलोकयितुमितस्ततो भ्रमतीति न मेन्यत्सुखावहमिति व्यज्यते । उपगीतिर्वृत्तम् ॥ १२४ ॥

चिन्तामुदाहरति । मयेति । कृष्णः सखायं प्रति वक्ति हे सखे मया तस्मिन् संकेतिते कुञ्जोपकण्ठे कुञ्जसविधे अद्य मुहुः कलकण्ठनादः कलहंसनिनादः कादम्बनिनादः वसन्तस्यातिमधुरत्वादिति भावः विधेयः कर्तव्यः एवं सति मधोर्वसंतस्य विभ्रमं भ्रान्तिं कलहंसनादेनेति भावः

प्रियाश्रितचेष्टाद्युद्बेगबोधितसंस्कारजन्यं ज्ञानं स्मृतिः यथा—

रामो लक्ष्मणदीर्घदुःखचकितो नाविष्करोति व्यथां
श्वासं नोष्णतरं जहाति सलिलं धत्ते न वा चक्षुषि ॥
वातावर्तविवर्तमानदहनक्रूरैरनङ्गज्वरैः
क्षामं किं तु विदेहराजतनयां भूयः स्मरन् वर्तते ॥ १२६ ॥

विरहकालीनकान्ताविषयकप्रशंसाप्रतिपादनं गुणकीर्तनम् यथा—

स्पर्शः स्तनतटस्पर्शो वीक्षणं वक्त्रवीक्षणम् ॥
तस्याः केलिकथालापसमयः समयः सखे ॥ १२७ ॥

कामक्लेशजनितसकलविषयहेयताज्ञानमुद्वेगः यथा—

---

आवहन्ति राधानेत्रोत्पलतोरणानि नयननलिनमालिकाः कुर्वीत विदधीत एवं च सति मय्येवं-विधे चेष्टमाने सावस्येतवानवेति चेतो व्यज्यते । उपजातिर्नाम वृत्तम् ॥ १२५ ॥

स्मृतिमुदाहरति । रामं इति । लक्ष्मणदीर्घदुःखचकितः लक्ष्मणस्य दीर्घं दुःखं तेन चकितो व्याकुलः व्यथां नाविष्करोति न प्रकटयति उष्णतरं श्वासं न मुञ्चति चक्षुषि नेत्रे सलिलमश्रु न धत्ते किन्तु वातावर्तविवर्तमानदहनक्रूरैः वातावर्तेन वात्यया विवर्तमानो यो दहनः एवं च निगमोयेऽग्यत्वं जाज्वल्यमानत्वं व्यज्यते तद्वत् क्रूरैः घातुकैः अनङ्गज्वरैः क्षामः कृशः विदेहराजतनयां सीतां भूयोऽनवरतम् स्मरन् वर्तते तिष्ठति एवं च स्वदुःखप्रकटेन लक्ष्मणस्या-तिदुःखं भावीति गोपयन् सीतास्मृतिजन्यांतःसन्तापव्याकुल एवास्त इति भावः । शार्दूल-विक्रीडितं वृत्तम् ॥ १२६ ॥

गुणकीर्तनं लक्षयति विरहकालीनेति एवं च संयोगकालीनव्युदासः तमुदाहरति । स्पर्शइति । कोपि विरही वक्ति हे सखे तस्या नायिकायाः स्तनतटस्पर्श एव स्पर्शः स्पर्शपदं सुखविशेष-जनकतां लक्षयन्नितरस्पर्शाधिकतमत्वं व्यञ्जयति तथा च तस्यावक्त्रवीक्षणमेव वीक्षणम् वीक्षणपदं सुखातिशयजनकत्वं लक्षयन्नितरविलोकनाधिकतमत्वं व्यनक्ति तथा तस्याः केलिकथालाप एव समयः समयपदं लोकोत्तरसुखं जनकत्वं लक्षयन्नितरसमयाधिकतमत्वं व्यञ्जयति । पथ्यावक्त्रम् ॥ १२७ ॥

गरलद्रुमकन्दमिन्दुविम्बं करुणावारिजवारणो वसन्तः ॥
रजनी स्मरभूपतेः कृपाणी करणीयं किमतः परं विधातः ॥ १२८ ॥

प्रियाश्रितकाल्पनिकव्यवहारः प्रलापः कल्पनायाः कारणमन्तःकरणविक्षेपः तस्य च निदानमुत्कण्ठा यथा—

अद्विसंवीक्षणं चक्षुरद्विसम्मलिनं मनः ॥
अद्विसंस्पर्शनः पाणिरद्य मे किं करिष्यति ॥ १२९ ॥

औत्सुक्यसन्तापादिकारितमनोविपर्याससमुत्थप्रियाश्रितवृथाव्यापारउन्मादः विपर्यासो व्याकुलव्यापारः स च कायिको वाचिकश्च। कायिको यथा—

प्रतिफलममृतांशोर्वीक्ष्य कान्तो मृगाक्ष्या
मुखमिति परिहासं कर्तुमभ्युद्यतोभूत् ॥

---

उद्वेगं लक्षयति कामक्लेशजनितसकलेत्यादिं तमुदाहरति। गरलद्रुमेति। विरहिजनोक्तिरियम् इंदुविंबमिंदुमंडलम् गरलं विषम् तस्य यो द्रुमः तस्य कन्दः एवं चातिदुःखदत्वं व्यज्यते वसंतः करुणावारिजवारणः करुणादया सैव वारिजं कमलम् आर्द्रचित्तभूमिकत्वादिति भावः तस्य वारणं वारयतीति वारणः वसंते हि कमलानामभावोभवेदिति भावः वारणपदं दयोन्मूलनसमर्थकतां व्यनक्ति तथा रजनी रात्रिः स्मरभूपतेः कृपाणी विरहिजननिकृन्तकत्वादिति भावः एवं सति हे धातः सर्वकर्तृत्वात् तदुपालम्भयोग्यत्वम् ध्वन्यते अतः प॰मेतदुपरि किं करणीयम् एवं च रमणमेव ममेदानीमुपस्थितामिति व्यज्यत एवं च तवैतादृशवस्तुविरचनानुचितमिति द्योत्यते उद्वेगः स्फुट एव। मालाभरणीयो वृत्तम् ॥ १२८ ॥

प्रलापं लक्षयति प्रियाश्रितेति प्रियाविषयक इत्यर्थः काल्पनिकः आंतःकरणविक्षेपो मनोव्यापारः तमुदाहरति। अद्विसमिति। कापि सहचरीत्याह हे सहचरि मे चक्षुः अद्विसंवीक्षणम् न द्वयोः संवीक्षणं यस्य तदांतरिक्तानवलोकीत्यर्थः तथा मे मनः अद्विसंमीलनम् न द्वयोः संमीलनं यस्य तदतिरिक्ताऽप्रायीत्यर्थः तथा मे पाणिः अद्विसंस्पर्शनम् न द्वयोः संस्पर्शो यस्य तदन्यासंस्पर्शीत्यर्थः अद्य किं करिष्यति एवं च नयनादिकरणव्यापारादज्ञात्तदन्याविषयिकत्वेन केनोपायेन विनिर्वाहो भवतीति व्यज्यते। अनुष्टुप् छंदः ॥ १२९ ॥

उन्मादं लक्षयति औत्सुक्येति। औत्सुक्यं कालासहिष्णुता मनोविपर्यासो मनोव्याकुलता

अथशिथिलितवाचो मानमाशंक्य तस्याः
स्पृशति पुलकभाजा पाणिपङ्केरुहेण ॥ १३० ॥

वाचिको यथा—

किं रे विधो मृगदृशां मुखमद्वितीयं
कन्दर्प दृप्यसि दृगम्बुजमन्यदेव ॥
झङ्कारमावहसि भृङ्ग तनुर्न तादृक्
कर्माणि धिङ् न पुनरीदृशमीक्षणीयम् ॥ १३१ ॥

मदनवेदनासमुत्थसन्तापकार्श्यादिदोषो व्याधिः यथा—

कोदण्डं विशिखो मनो निवसतिः कामस्य तस्या अपि
भ्रूवल्ली नयनांचलन्मनसि ते वासः समुन्मीलति ॥

---

तं विभजते कोपि क इति प्रथमोद्दिष्टत्वात् कायिकमुदाहरति। प्रतिफलमिति। काचित्काञ्चिदाह कान्तः अमृतांशोः चन्द्रस्य प्रतिफलं प्रतिबिंबम् मणिमयकुण्डलादाविति भावः अवलोक्य प्रेक्ष्य एवं च मुखभ्रान्तियोग्यत्वमावेद्यते मृगाक्ष्याः हरिणाक्ष्याः मुखं वदनमितिहेतोः परिहासमुपहासम् कर्तुम् अभ्युद्यतोभूत् उद्युक्तोभूत् अथानन्तरम् शिथिलितवाचः सक्तवाचः तस्याः। प्रियायाः मानमभिम्लानम् आशङ्कया "पुलकभाजा रोमाञ्चवता सात्विकभावोदयादितिभावः पाणिपंकेरुहेण करकमलेन स्पृशति अनुनयार्थमिति भावः। मालिनीवृत्तम् ॥ १३० ॥

वाचिकमुदाहरति। किं रे विधो इति। कोपि विरही वक्ति रे विधो चन्द्र रे इतिसंबोधनं नीचतां गमयति दृप्यसि गर्वमावहसि अहं सुक्षतइति इदं किं कुतः यतो मृगदृशो नायिकायाः मुखं वदनम् अद्वितीयं सर्वोत्कृष्टताशालि रे कंदर्प मदन किं कुत्सितम् यतो मृगदृशो दृगम्बुजम् नेत्रकमलम् अन्यदेवोन्मादकम् एवं च कामिनीनयनमेवोन्मादकमिति व्यज्यते किंच हे भृङ्ग भ्रमर झङ्कारं शब्दविशेषगर्वोद्रेकादिति भावः इदं किम् यतस्तादृक् तनुः न तथाविधसौंदर्योत्कर्षशालि शरीरं नास्तीत्यर्थः एतादृशसम्भाषणमपि न समीचीनमित्याह कर्माणि एतादृशवचनानि तथाविधव्यापारान् धिक निंद्यानीत्यर्थः ईदृशमभिरूपशालि ईक्षणीयम् कामिनीरूपं वस्तु पुनः क्व दुष्प्रापमित्यर्थः एवं च कामिनीप्राप्त्यनुकूला एव व्यापाराः समीचीना नान्य इति द्योत्यते। वसंततिलकावृत्तम् ॥ १३१ ॥

इत्थं साम्यविधौ तयोः प्रभवति स्वामिंस्तथा स्निह्यतां
तन्वाना तनुतां क्रमादतनुतां नैषा यथा गच्छति ॥ १३२ ॥

विरहन्यथाविष्कारमात्रमेव जीवनावस्थानं जडता यथा—

पाणिर्नीरवकङ्कणः स्तनतटीं निष्कम्पमानांशुका
दृष्टिर्निश्चलतारका समभवन्निस्ताण्डवं कुण्डलम् ॥
कश्चिन्नार्पितया समंकृशतनोर्भेदो भवेन्नो यदि
त्वन्नामस्मरणेन कोपि पुलकारम्भः समुज्जृम्भते ॥ १३३ ॥

निधनस्यामंङ्गलत्वान्नोदाहृतिरुदाहृता स्वप्नचित्रसाक्षाद्भेदेन दर्शनं त्रिधा तत्र स्वप्नदर्शनं यथा—

मुक्ताहारं न च कुचगिरेः कङ्कणंनैवहस्ता-
त्कर्णात्स्वर्णाभरणमपि वा नीतवान्नैव तावत् ॥
अद्य स्वप्ने वकुलमुकुलं भूषणं सन्दधानः
कोयं चौरो हृदयमहरत्तन्वि तन्न प्रतीमः ॥ १३४ ॥

---

व्याधिं लक्षयति मदनवेदनेति रोगादिजन्यकार्श्यादिनिरासाय मदनवेदनासमुत्थेति तमुदाहरति । कोदंडमिति । कापिदूती नायकं प्रत्याह हे सखे तस्या नायिकायाः भ्रूवल्ली नयनाञ्चलं मनश्च कामश्च कोदंडं धनुः विशिखो बाणः वसतिः स्थानम् यथास्ति तथा तस्याः भ्रूवल्ली नयनाञ्चलं मनसि वासस्तवापि समुन्मीलति वर्तते इत्थममुना प्रकारेण साम्यविधौ अर्थान्मदनस्य तव च प्रभवति सति तस्यां तथास्निह्यताम् प्रेमक्रियताम् यथैवातनुतां कार्श्यं तन्वाना विस्तारयन्ती क्रमादवस्थान्तरात् अतनुतां तनुराहित्यं अनङ्गत्वमिति । यावत् न गच्छति नाभाति । शार्दूलविक्रीडितं वृत्तम् ॥ १३२ ॥

जडतां लक्षयति विरहेति तमुदाहरति पाणिरिति । दूतीं कंचित्प्रत्याह स्पष्टम् । शार्दूलविक्रीडितं वृत्तम् ॥ १३३ ॥

मुक्ताहारमिति । हारपदं चौर्ययोग्यतां ध्वनयति नच कुचगिरेः हृतवान् चोरितवान् हस्तात्कङ्कणम् रत्नखचितमिति भावः कर्णाभरणमपि कर्णालङ्करणमपि अद्य स्वप्ने निद्रायाम् बकुलमुकुलं वञ्जुलकुड्मलम् भूषणं सन्धानः एवं च निकुञ्जवसतिलालसत्वमावेद्यते हृदयं

चित्रदर्शनं यथा —

नीवीं हरेदुरसिजं विलिखेन्नखेन
दन्तच्छदं च दशनेन दशेदकस्मात् ॥
इत्थं पटे विलिखितं दयितं विलोक्य
बाला पुरेव न जहार विहारशङ्काम् ॥ १३५ ॥

साक्षाद्दर्शनं यथा—

चेतश्चंचलतां त्यज प्रियसखि व्रीडे न मां पीडय
भ्रातर्मुंच दृशौ निमेष भगवन् काम क्षणं क्षम्यताम् ॥
बर्हं मूर्धनि कर्णयोः कुवलयं वंशं दधानः करे
सोयं लोचनगोचरो भवति मे दामोदरः सुन्दरः ॥ १३६ ॥

---

यच्चित्तमहरत् अयं कश्चौर इति न प्रतीमः न जानीमः। एवं च बाह्यद्रव्यभूषाय हारकस्तस्कराः संति विदिताः परंतु अन्तरद्रव्यहृदयापहारी न कोपि विदित इति द्योत्यते। मन्दाक्रान्ता वृत्तम् ॥ १३४ ॥

चित्रदर्शनमुदाहरति। नीवीमिति। काचित्काञ्चिदाह बाला मुग्धा पटे विलिखितं चित्रितं दयितं विलोक्य पुरेव पूर्ववत् किमियं नीवीं हरेत् मोचयेत तथा उरसिजं कुचम् नखेन विलिखेत् नखक्षतानि दद्यादित्यर्थः तथा दन्तच्छदमधरम् दशनेन दन्तेन अकस्मादतर्कितम् दशेत् इत्थं विहारशङ्काम् केलिभयवितर्कम् न जहार न तत्याज। वसन्ततिलकावृत्तम् ॥ १३५ ॥

साक्षाद्दर्शनमुदाहरति। चेत इति। नायिका काचित्स्वचित्तादीन् प्रत्याह हे चेतः चञ्चलतां व्याकुलतां विषयान्तरेच्छां त्यज हे सखि प्रियसखि व्रीडे लज्जे मां प्रियदर्शनोत्काम् न पीडय मनीषितभागादिति भावः तथा भ्रातर्बंधो दर्शनसुखदातृत्वादिति भावः निमेषपक्ष्मपातदृशौ नेत्रे मुञ्च तावन्नेवान्तराय इति भावः तथा काम क्षणं क्षम्यताम् मनसोऽवरोधनार्थमिति भावः किमर्थमित्यत आह मूर्धनि मस्तके बर्हं मयूरपिच्छम् कर्णयोः कुवलयं करे वंशं दधानः सोयं प्रसिद्धविभवः सुंदरः दामोदरः श्रीकृष्णः दुर्लभदर्शनत्वमावेद्यते लोचनगोचरो नयनविषयो भवेत्। शार्दूलविक्रीडितं वृत्तम् ॥ १३६ ॥

माध्वीकस्यन्दसन्दोहसुन्दरीं रसमञ्जरीम् ॥
कुर्वन्तु कवयः कर्णभूषणं कृपया मम ॥ १३७ ॥

तातो यस्य गणेश्वरः कविकुलालङ्कारचूडामणि-
र्देशो यस्य विदेहभूः सुरसरित्कल्लोलकिर्मीरिता ॥
पद्येन स्वकृतेन तेन कविना श्रीभानुना योजिता
वाग्देवी श्रुतिपारिजातकुसुमस्पर्धाकरी मञ्जरी ॥ १३८ ॥

## इति श्रीकविरत्नभानुदत्तविरचिता रसमंजरी संपूर्णतामगात् ।

### शुभं भूयात् ।

---

कविः स्वकृतग्रन्थश्रवणाङ्गीकारं प्रार्थयति। माध्वीकेति ।माध्वीकस्य मधुनः स्यन्दः प्रस्रावः तस्य संदोहः सारसङ्ग्रहः रसमञ्जरी ग्रन्थनामकृपया कवयः कर्णभूषणं कुर्वन्तु शृण्वन्तु अन्या मञ्जरी माध्वीकस्यन्दनसुन्दरी कर्णावतंसी क्रियते । इति लौकिकम् ॥ १३७ ॥

तात इति। कविकुलालङ्कारचूडामणिः कविवर्गालङ्करणशिखामणिः गणेश्वराख्यस्तातो जनकः सुरसरितोवाग्वत्याः कल्लोलैर्जलतरङ्गैः किर्मीरिता चित्रिता 'चित्रःकिर्मीरकल्माष' इत्यमरः वाग्देव्याः सरस्वत्याः श्रोत्रे यत्पारिजातकुसुमं तत्सदृशी मञ्जरी जयतु आकल्पं तिष्ठतु । शार्दूलविक्रीडितं वृत्तम् १३८

इति श्रीमत्कविरत्नभानुदत्तविरचिता रसमञ्जरीव्याख्या समाप्तिमगमत् ॥ ॥ समाप्तोयं ग्रन्थः ॥ शुभमस्तु ॥ श्रीरस्तुः ॥ श्रीजानकीवल्लभो विजयते ॥ शुभम् ॥

